# चिन्तोः चयनम्



सामान्यं फेनकम् उपयुज्य चिन्तोः स्नानं कारितं मात्रा । अतः चिन्तुः कुपितः अस्ति ।









आपणे चिन्तुः तत्रत्यानि सर्वविधानि अपि फेनकानि परिशीलयति ।







गतेभ्यः अशीतिवर्षेभ्यः श्रीगन्धस्य सुगन्धं गृहं गृहं प्रापयन्ती अस्ति मैसूरुश्रीगन्धसंस्था ।










PIRANHA


ACTIVE


CADET HX


YANKEE


ROBO COP

# Heroes start early.

Ride, race, take a tumble or even take a fall.

Because it's never too early to be a hero.



# चन्द्रगिरिदुर्गम्

## - तिरुपतिसमीपस्थम्

विजयनगरराजाः तेलुगु-कन्नडभाषीयाणां विशालप्रदेशानां शासकाः आसन् । त्रिशताधिक-वर्षाणि यावत् तेषां वैभवोपेतं शासनं प्रवृत्तम् । विजयनगरस्य शासकाः 'राय'शब्देन निर्दिश्यन्ते स्म । जनाः तेषां विषये आदरप्रदर्शनाय 'रायलवारु' इति वदन्तः बहुवचनप्रयोगेण तेषां श्रेष्ठतां श्लाघन्ते स्म । ते कलायाः संस्कृतेः साहित्यस्य च आश्रयदातारः आसन् । तेलुगु-साहित्यस्य समृद्धिं वर्धयन्तः ते कलायाः विविधान् प्रकारान् पोषितवन्तः ।




विजयनगरराजानाम् उन्नत्यवनत्यादयः 'सोन्-एट्-ल्युमैर्'(दृश्यश्रव्यप्रदर्शनम्)नामकस्य कार्यक्रमस्य द्वारा चन्द्रगिरौ प्रदर्श्यन्ते । चन्द्रगिरिः तिरुपतितः १२ कि.मी. दूरे अस्ति । तस्य पार्श्वे स्वर्णमुखीनदी प्रवहति । विजयनगरराजानां राजधानी आसीत् एतत् नगरम् ।

चन्द्रगिरिस्थं सन्-एट्-ल्युमैर्प्रदर्शनं (दृश्यश्रव्यप्रदर्शनम्) अमिताब्बच्चनस्य ध्वनिना युक्तम् अस्ति । दक्षिणभारते एव अतिविशालं साम्राज्यं स्थापितवतां विजयनगरराजानां शौर्यगाथाः ज्ञापयति एतत् । इतिहासासक्तैः सर्वैः श्रोतव्या कथा एषा । आन्ध्रप्रदेशप्रवासोद्यमसंस्थया सज्जीकृतम् एतद् आसक्तिजनकं कुतूहलकरं शैक्षणिकं प्रदर्शनम् अवश्यं द्रष्टव्यं विद्यार्थिभिः तन्मातापितृभिः च ।

आन्ध्रप्रदेशे *'रायलसीमा'*नामा कश्चन विशालः भूभागः अस्ति, यस्य च अर्थः भवति *'रायाणां भूमिः'* इति । एतस्य अपरम् अपि नाम आसीत् 'रत्नलसीमा' इति । *'रत्नानां भूमिः'* इति तस्य पदस्य अर्थः । विजयनगरशासकेषु कृष्णदेवरायः अतिप्रसिद्धः शासनदक्षः जनप्रियः च आसीत् ।

डेक्कन्प्रदेशे मोहम्मद् बिन् तुघलकस्य सामर्थ्यं यदा क्षीणतां गतं तदैव विजयनगरसाम्राज्यम् उदितम् । त्रयः राजवंशाः विजयनगरसाम्राज्यस्य शासनं कृतवन्तः । तेषु तलुववंशः अन्तिमः । कृष्णदेवरायः (१५०९-१५३०) कृष्णातुङ्गभद्रानद्योः मध्ये स्थितस्य प्रदेशस्य शासनं कृतवान् । पूर्वतीरप्रदेशस्य ओरिस्साराज्यस्य च शासकान् पराजितवान् च ।

चन्द्रगिरिदुर्गम् अधुना शिथिलस्थितौ अस्ति । तत्रत्यौ राज्ञीप्रासादः राजप्रासादः चेति उभौ प्रासादौ आन्ध्रप्रदेशप्रवासोद्यमसंस्थया उज्जीवितौ स्तः । एतस्मिन् दुर्गे बहूनि मन्दिराणि वर्तन्ते ।

कश्चन एतिहासिकः कुतूहलकरः विषयः एवं वर्तते – विजयनगरराजाः आंग्लैः सह सन्धिम् अङ्गीकुर्वन्तः 'चेन्नपट्टन'नामकं भूभागम् आंग्लेयेभ्यः उपायनरूपेण दत्तवन्तः आसन् । स एव भूभागः मद्रास् इति नामान्तरं प्राप्नोत्, इदानीं च 'चेन्नै' इति पदेन निर्दिश्यते । एतस्मिन् भूभागे ब्रिटिश्जनैः सेण्ट्जार्जदुर्गं निर्मितम् । तदाधारेण ते 'ईस्ट् इण्डिया कम्पनी'नाम्ना भारते स्वस्य शासनं दृढीकर्तुं मार्गं कल्पितवन्तः ।

**चन्द्रगिरौ विजयनगरोत्सवः**

(अक्टोबर्मासस्य तृतीयेषु शुक्र-शनि-भानुवासरेषु)

तिरुपतिसमीपे स्थितं चन्द्रगिरिदुर्गं (यत्र च दृश्यश्रव्यप्रदर्शनं प्रतिदिनम् आयोज्यते) विजयनगरशासकानां वैभवं विस्तारं च सङ्केतयति । सौभाग्यवशात् उत्सवदिनेषु एव तिरुमलदेवस्थाने वार्षिकब्रह्मोत्सवः अपि प्रचलिष्यति । उत्सवं प्रति आगन्तारः सङ्गीतज्ञैः नृत्यकारैः च प्रदर्श्यमानस्य प्रदर्शनस्य द्वारा इतिहासं प्रति यात्रां कर्तुम् अर्हन्ति ।























## अन्तरङ्गम्




**SUBSCRIPTION**

**For USA and Canada**
**Single copy $2**
**Annual subscription $20**
***Remittances in favour of***
***Chandamama India Ltd.***
to
**Subscription Division**
CHANDAMAMA INDIA LIMITED
No. 82, Defence Officers Colony,
Ekkatuthangal, Chennai - 600 097
E-mail : subscription@chandamama.org

**उपायनीक्रियताम्**
वायुयानेन भारतेतरदेशान् प्रति
**वार्षिकं ( १२ सञ्चिकाः ) - रू. ९००/-**
**भारते रू. १२०/- (बुक्पोस्ट् द्वारा)**
भवदीयं धनं D.D.द्वारा धनादेश(M.O.)द्वारा वा
'Chandamama India Limited'
नाम्ना प्रेषणीयम् ।



विज्ञापिकादानार्थं सम्पर्क्यताम् -
**चेन्नै -**
Ph - 044-2347384,
2347399
e-mail : advertisements@
chandamama.org
**देहली -**
*मोना भाटिया*
Ph - 011-6515111/
6565513/6565516
**मुम्बयी -**
*शकीलमुल्ला*
Ph - 022-2661599/
2661946/2653057



*संस्थापकौ –*
**चक्रपाणिः नागिरेड्डी च**

# हिंसायाः कृते न भवेत् अवसरः

सद्यः एव राष्ट्रपतिपदात् निवृत्तस्य श्रीमतः के. आर्. नारायणवर्यस्य मुखात् वयं श्रुतवन्तः यत् धार्मिकसहिष्णुता रक्षणीया इति । ततः एकस्य दिनस्य अनन्तरं राष्ट्रपतिपदं विभूषयता डा॰ ए.पि.जे.अब्दुल्कलामवर्येण स्वस्य आशयं प्रकाशयता उक्तं यत् मतनिरपेक्षताविषये आस्थादर्शनात् एव भारतस्य पुनरुत्थानं साध्यम् इति ।

एवं स्वस्य आशयं प्रकटयतोः तयोः उभयोः अपि मनसि देशस्य केषुचित् भागेषु एषु दिनेषु जाताः मतीयासहनाघटनाः स्थिताः आसन् इति तु स्पष्टम् । कोऽपि धर्मः मतं वा हिंसां न बोधयति । अधिकारदाहयुक्ताः, मतान्धाः, स्वार्थसाधकाः वा स्वार्थस्य निमित्तं मुग्धान् जनान् कष्टगर्ते पातयन्ति । एषु दिनेषु कस्यचित् मतस्य अनुयायिनः अपरमतस्य त्रिंशदधिकजनान् यदा हिंस्रतया मारितवन्तः तदा हिंसा विकटतां गता, देशश्च सङ्कटग्रस्तः जातः इत्यादिकं वयं स्मरामः एव ।

तस्मिन् एव दिने सुदूरे इंग्लेण्ड्देशे क्रिकेट्पटवः देशस्य जयाय श्रमं कुर्वन्तः आसन् । अन्तिमे घट्टे यदा पराजयरेखा आसन्ना तदा मोहम्मदखयीफः, जहीरखानः च क्रीडाङ्गणे स्वस्य कौशलं प्रदर्शयन्तौ स्मरणार्हस्य जयस्य कारणीभूतौ जातौ । तदवसरे ताभ्यां स्वस्य मतीयपृष्ठभूमिका स्मृतिपथे न स्थापिता आसीत् प्रायः ।

एतत्सर्वं मनसि आकलय्य वयं विमृशामः चेत् भासते यत् निवृत्तस्य प्रवृत्तस्य च राष्ट्रपतेः चिन्तने समानता आसीत् इति ।

भारते हिंसायाः कृते कोऽपि अवसरः न स्यात् । सर्वोऽपि जनः शान्तिं परहितेच्छां च कामयेत ।

---

*सम्पादकः* – **विश्रम्**

**Visit us at : http://www.chandamama.org**

भारतनायकस्पर्धायां भागम् ऊढ्वा प्राप्नुवन्तु अपूर्वाणि पारितोषिकाणि

# भारतीयाः नायकाः-१२

अत्र ये राष्ट्रियनायकाः केचन उल्लिखिताः ते किं ज्ञायन्ते भवद्भिः ?

**समुचितोत्तरदातारः त्रयः पुरस्क्रियन्ते द्विचक्रिकादानेन**



**1** आंग्लसर्वकारस्य आधीन्ये ये उद्योगिनः आसन् तान् अहं बोधितवान् यत् उद्योगः त्यक्तव्यः इति । 'शेर् ए पञ्जाब्' इति ख्यातिः अपि आसीत् मम । अहं कः ?

..........................................................................

**2** अहं क्रान्तिकारी तमिळुकविः । मम गीतेषु भारतमाता शक्तिरूपेण वर्ण्यते स्म । मम नाम किम् ?

..........................................................................

**3** मया 'केसरी' पत्रिकायाः सम्पादनं कृतम् । आंग्लसर्वकारेण अहं बर्मादेशीये मण्डाले-कारागारे स्थापितः षड् वर्षाणि यावत् । किं मम नाम जानन्ति भवन्तः ?

..........................................................................

**4** मया हिन्दुस्थानीय-समाजवादि-प्रजाप्रभुत्व-सैन्यम् आरब्धं, १९३१ तमे वर्षे राजगुरु-सुखदेवाभ्यां सह शूलारोपणं प्राप्तं च । मम नाम किम् ?

..........................................................................

**5** अहं सत्याग्रहं राजनैतिकशस्त्रत्वेन उपयुक्तवान् । तस्मात् एव इष्टं सिद्धं जातम् । मम नाम किं स्यात् ?

..........................................................................

प्रतिप्रश्नम् उत्तरं लिखन्तु । एतेषु पञ्चसु नायकेषु प्रियतमः कः किमर्थं च इति दशभिः शब्दैः लिखन्तु । **मम प्रियतमः नायकः** ..........................................

..........................................................................

..........................................................................

..........................................................................

भागग्रहीतुः नाम ..........................................

वयः .................... कक्ष्या ....................

सङ्केतः ..........................................

..........................................................................

..........................................................................

पिन् .................... दूरवाणी ....................

एतं पुटं पृथक्कृत्य प्रेषयन्तु अधोनिर्दिष्टसङ्केताय -

**भारतीयनायकस्पर्धा-१२**
चन्दमामा इण्डिया लिमिटेड्,
८२, डिफेन्स् आफीसर्स् कालोनी
एक्काडुतङ्गल्, **चेन्नै - ६०० ०९७**
उत्तरप्रेषणाय अन्तिमदिनाङ्कः - **५, अक्टोबर्, २००२**

***नियमाः*** -

१. अधिकाष्ट ऊनचतुर्दशवर्षीयाः एतस्यां स्पर्धायां भागं ग्रहीतुम् अर्हन्ति ।
२. विविधभाषाभिः प्रेषितानि उत्तराणि परिशील्य त्रयः श्रेष्ठाः चीयन्ते । यदि योग्योत्तरदातारः बहवः तर्हि प्रियतमनायकविषये लिखितं वाक्यम् अवलम्ब्य चयनं क्रियते ।
३. निर्णायकानां निर्णयः एव अन्तिमः ।
४. एतं विषयम् अधिकृत्य पत्रव्यवहारः कोऽपि न करणीयः ।
५. विजेतारः पत्रद्वारा सूच्यन्ते ।

# योग्यः प्रतिस्पन्दः

रामः भीमः च प्रतिवेशिनौ । रामः पुस्तकसङ्ग्रहप्रियः । कदाचित् रामस्य गृहम् आगतः भीमः कपाटिकास्थानि पुस्तकानि दृष्ट्वा अवदत् – ''मित्र ! प्रतिवेशी सन् अपि अहं भवत्समीपे एतावन्ति पुस्तकानि सन्ति इति न जानामि स्म खलु । द्वित्राणि पुस्तकानि मह्यं ददातु । पठित्वा प्रत्यर्पयिष्यामि'' इति ।

तदा रामः अवदत् – ''क्षन्तव्यः अहम् । पठनाय पुस्तकस्य अन्यत्र नयनं न रोचते मह्यम् । यदि भवान् इच्छति तर्हि अत्रैव उपविश्य आदिनं पठतु नाम'' इति ।

भीमाय रामस्य एतत् कथनं न अरोचत । तथापि कृत्रिमहासं प्रकटयन् सः – ''एवम् ! अस्तु नाम । पुनः कदाचित् आगत्य पठिष्यामि'' इति उक्त्वा ततः निर्गतवान् ।

सप्ताहानन्तरं रामः भीमस्य गृहम् आगतवान् । ''मित्र ! अल्पं साहाय्यम् अपेक्ष्यते मया । मम गृहे ऊर्णनाभानां जालं प्रवृद्धम् अस्ति । अतः भवद्गृहस्य सदण्डसम्मार्जनीं सकृत् ददातु । घण्टाभ्यन्तरे प्रत्यर्पयिष्यामि'' इति अवदत् च ।

तदा भीमः हसन् अवदत् – ''क्षन्तव्यः अहम् । सदण्डसम्मार्जनी मम गृहे तु अस्ति एव । किन्तु ताम् अन्यस्मै दातुं न इच्छामि अहम् । प्रतिवेशी भवान् मम मित्रम् । अतः अहम् एव भवतः गृहं प्रति ताम् आनीय ऊर्णनाभजालानि निवारयिष्यामि'' इति ।

इदानीं रामः अवगतवान् यत् पुस्तकं न दीयते इति उक्तस्य वचनस्य प्रतिस्पन्दरूपेण एषः सम्मार्जनीदानं निराकुर्वन् अस्ति इति ।

अतः सः लज्जितः जातः ।



अज्ञातप्रायाणि भारतीयानि स्थलानि

# टैडाग्रामे 'वनघण्टा'



टैडा इत्येषः पूर्वपर्वतश्रेण्यां स्थितः कश्चन लघुः ग्रामः । एषः आन्ध्रप्रदेशे विशाखपत्तनतः ७५ कि.मी. दूरे अस्ति । आन्ध्रप्रदेशस्य प्रवासाभिवृद्धिसंस्थानम्, अरण्यविभागः च सम्भूय एतस्मिन् ग्रामे प्रकृतिशिबिरं व्यवस्थापयतः 'वनघण्टा'(Jungle Bell)नाम्ना । एषः प्रवासोद्यम-परिसर-शिक्षणात्मकः कार्यक्रमः राज्ये एव असदृशः ।

वनघण्टानामकं प्रकृतिशिबिरम् एतत् विंशत्येकरात्मके अरण्ये प्रसृतम् अस्ति । अत्र शिबिरार्थिनः पटमण्डपे, कुटीरे, गृहे, सामूहिकवसतिप्रकोष्ठे वा वासं कर्तुम् अर्हन्ति । एतेषु सर्वेषु अपि उपाहारगृहम्, चाय-काफी-आपणः, प्रकृतिसम्बद्धः ग्रन्थालयः, दोला इत्यादीनि आधुनिकानि आनुकूल्यानि प्राप्यन्ते ।



यदि भवन्तः वनविहारं कर्तुम् इच्छन्ति तर्हि अनुभविनः प्रशिक्षिताः मार्गदर्शकाः समीपे स्थितानाम् अरण्य-पर्वत-ग्राम-पक्षि-पशु-वर्गादीनाम् अभिज्ञाने साहाय्यं कर्तुम् अर्हन्ति । टैडाग्रामः वस्तुतः दैवदत्तः वरः इव अस्ति । सार्धत्रिशताधिकाः (३५०) पक्षिभेदाः एतस्मिन् परिसरे वसन्ति । यदि भवन्तः वास्तविकं 'वनवासम्' एव इच्छन्ति तर्हि पशूनां पदानां, ध्वनीनां, वासस्थानानां च अभिज्ञानं व्याघ्रादीनां नेत्रयोः स्वहस्तैः निवेशनम् इत्यादीनि कौशलानि बोधयन्ति अनुभविनः शिक्षकाः । एतस्मिन् एव वनवासकाले भवन्तः टैडाग्रामस्य परिसरे वसतः चित्रहरिणान्, भषणशीलहरिणान्, अलसहरिणान्, वन्यवराहान्, चित्रकान् चापि द्रष्टुम् अपि अर्हन्ति ।

आनन्ददायकाः लघुपर्वताः, उन्नतपर्वताः च एतस्य ग्रामस्य समीपे एव सन्ति । अतः पर्वतारोहणसाहसाय, शिलारोहणयत्नाय चापि एतत् प्रशस्तं स्थलम् ।

**कथं गन्तव्यम् -** विशाखपत्तणतः भाटककार्यानेन टैडा गन्तुं शक्यम् । तथापि रैल्यानेन गमनम् एव प्रशस्तं स्यात् । रैल्यानेन गमनसमये रमणीयः हरिद्वर्णीयः परिसरः, पर्वताः, खाताः, जलपाताः, बहवः मार्गवक्रताः च प्राप्यन्ते । अथवा ए.पि.टि.डि.सि.संस्थायाः 'हैटेक्'यानेन आयोज्यमानायाः प्रवासव्यवस्थायाः उपयोगः अपि स्वीकर्तुं शक्यः ।



# मायासरोवरम्

## ६

*[मकरमुखः यदा चरकाचार्यसमीपम् आगतः तदा जयशीलः उपायेन जलग्रहम् आरुह्य मकरमुखं स्ववशं कृतवान् । जलग्रहम् आरूढौ जयशीलः सिद्धसाधकः च मकरमुखम् आदिष्टवन्तौ यत् गजं हिरण्यपुरं प्रति नयतु इति । एवं गमनसमये वृक्षस्य उपरि स्थितः भिल्लभीमः मकरमुखं लक्ष्यीकृत्य बाणप्रयोगं कृतवान् । भिल्लभीमः यत्र उपविष्टः आसीत् तं वृक्षं जलग्रहः उन्मूल्य पातितवान् । तदनन्तरम् .......]*

वृक्षस्य पतनात् भीतः भिल्लभीमः भयकारणतः उच्चैः आक्रोशनं कृतवान् । वृक्षेण सहैव सोऽपि भूमौ पतितः । मकरमुखस्य व्यवहारात् क्रुद्धः जयशीलः तस्य स्कन्धं बलात् कम्पयन् अवदत् - ''अये दुष्ट ! मम अनुमतिं विना कथं भवान् वृक्षस्य पातनाय जलग्रहम् आदिष्टवान् ?'' इति ।

तदा मकरकेतुः वेदनामिश्रितेन स्वरेण उक्तवान् - ''जयशीलवर्य ! यदि अहं वृक्षं न पातयेयं तर्हि सः भिल्लभीमः अपरस्य बाणस्य प्रयोगेण माम् अमारयिष्यत् एव । अतः एव मया वृक्षपातननिर्णयः कृतः । एतस्मात् ऋते अन्यः मार्गः न आसीत् एव खलु मम पुरतः'' इति ।

सिद्धसाधकः गजात् उत्प्लुप्य शाखानां मध्ये स्थितं भिल्लभीमम् उत्थाप्य - ''अये मूर्ख ! हस्तपादादयः न भग्नाः खलु ? दृढतया तिष्ठतु तावत्'' इति अवदत् ।



भिल्लभीमः सम्यक् तिष्ठन् - "भूतस्वामिवर्य ! अहम् अक्षतः अस्मि । अस्थिभङ्गः व्रणः वा मम न जातः । मया प्रयुक्तः बाणः लक्ष्यप्राप्तौ असफलः जातः खलु इत्यस्ति मम खेदः । तस्मात् एषः दुष्टः सजीवं स्थातुं शक्तः । मम अपरः बाणः तं दुष्टम् अवश्यं यमसदनं प्रेषयिष्यति" इति वदन् उत्साहेन धनुः हस्तेन गृहीतवान् ।

तदा जयशीलः अपि गजात् वेगेन अवतीर्य भीमं कण्ठे गृहीत्वा - "अये मूर्ख ! भवतः बाणः यदि लक्ष्यच्युतः स्यात् तर्हि अहं व्रणितः अभविष्यं कदाचित् । एतावत् अपि न अवगतं भवता । धिक् मूर्ख !" इति अतर्जयत् ।

"श्रीमन् ! मम बाणः रामबाणायते । सः कदापि लक्ष्यच्युतः न भवति । एतस्य दुष्टस्य भ्रुवोः मध्ये बाणप्रयोगं कृत्वा किमहं मम सामर्थ्यं प्रमाणीकरवाणि ?" इति अपृच्छत् भिल्लभीमः ।

जयशीलः तस्य हस्तात् धनुः बाणं च गृहीत्वा पार्श्वे क्षिप्तवान् । तस्मिन् एव समये वीरः चरकाचार्यः च तत्र आगतौ । चरकाचार्यः मकरकेतुं दृष्ट्वा उक्तवान् - "किम् एतत् ! उदरे खड्गः भुजे बाणः च संलग्नः दृश्यते ! अहो, कीदृशी दुर्गतिः !" इति ।

"युक्तम् उक्तं भवता । सः अधमः मानवः अपि मम अपमानं कर्तुं समर्थः जातः । किम् एतादृशेन जीवनेन ? प्राणत्यागः एव वरम् एतस्मात् अपि । कुत्रास्ति मम शूलम् ?" इति वदन् मकरकेतुः स्वस्य शूलस्य अन्वेषणम् आरब्धवान् ।

तदा सिद्धसाधकः स्वस्य हस्ते स्थितं शूलम् उन्नीय अवदत् - "अत्रास्ति भवतः शूलम् । तदिदानीं मम अधीनम् अस्ति" इति ।

एतदनन्तरं जयशीलः सिद्धसाधकश्च पुनरपि गजस्य उपरि उपविशन्तौ उक्तवन्तौ - "अये, मकरकेतो ! किं भीत्या ? कोऽपि भवन्तं मारयितुं न अर्हति । भवन्तम् अनतिदूरे स्थितं ग्रामं प्रति इदानीं नेष्यामः । तत्र चिकित्सां कारयिष्यामः । यदा व्रणादयः अपगताः भविष्यन्ति तदा एव हिरण्यपुरराजस्य समीपं नेष्यामः । अतः भवता चिन्ता करणीया नास्ति" इति ।

तदा मकरकेतुः हस्तौ उन्नीय नमस्कुर्वन् अवदत् - "सर्वं मायासरोवरेश्वरस्य माया । मार्गे कोऽपि अधमः भिल्लः मां लक्ष्यीकृत्य बाणप्रयोगं यथा न कुर्यात् तथा अवधानं भवतु । मम प्राणापायः यथा न स्यात् तथा

व्यवस्था करणीया भवद्भिः'' इति ।

''उक्तं खलु - भीतिः मास्तु इति । अतः निश्चिन्ततया जलग्रहम् अग्रे नयतु भवान्'' इति उक्तवान् जयशीलः ।

जलग्रहः ततः अग्रे अगच्छत् । यावत् ते किञ्चिद्दूरं गताः तावता वृक्षाणां मध्यतः ढक्काध्वनिः श्रुतः । अनन्तरक्षणे एव दशाधिकाः युवकाः भूतनाथः च वृक्षेभ्यः अवतीर्णवन्तः । तेषां हस्ते आयुधानि आसन् ।

भूतनाथः कम्पमानः उत्कूर्दन् च - ''बलिः, बलिः आवश्यकी मह्यम् । अहम् अस्मि महाकाली । मकरमुखस्य कण्ठं विच्छिद्य तदीयेन रक्तेन मम पादौ आर्द्रीकरिष्यामि । यदि एवं कर्तुं न शक्यते तर्हि भिल्लकुलम् एव नाशयिष्यामि'' इति अवदत् उच्चस्वरेण ।

जलग्रहस्य पृष्ठतः स्थितः भीमः - ''मातः ! कालि !'' इति उच्चैः वदन् भूतनाथं नमस्कृत्य सिद्धसाधकम् उद्दिश्य अवदत् - ''अये महानुभाव ! अस्माकं गणाचार्ये भूतनाथे कुलदेवी महाकाली आविष्टा दृश्यते । सा मकरमुखस्य रक्तम् इच्छति । अतः तं गजात् अधः पातयतु । अग्रे यत् करणीयं तत् करिष्यति अस्माकं गणाचार्यः'' इति ।

गणाचार्यस्य व्यवहारं, भिल्लभीमस्य कथनं च श्रुत्वा जयशीलः अवगतवान् यत् अचिरात् एव किमपि अहितं भवितुम् अर्हति इति । अतः सः मकरकेतोः कर्णे मन्दस्वरेण किमपि अवदत् ।

अनन्तरक्षणे मकरकेतुः जलग्रहं सम्बोधयन् अवदत् - ''अये जलग्रह ! एतं भिल्लभीमं



शुण्डया गृहीत्वा उन्नयतु'' इति ।

झटिति जलग्रहः शुण्डां प्रसार्य भीमं कटौ गृहीत्वा उपरि उन्नीतवान् । तदा भीमः हस्तौ पादौ च इतस्ततः चालयन् - ''जयशीलवर्य ! महाकाली मकरमुखं बलिरूपेण इच्छति । किन्तु भवान् अत्र विघ्नं कुर्वन् अस्ति । एतस्मात् महाकाली क्रुद्धा भवेत् इति किं भवान् न जानाति ? यदि सा क्रुद्धा स्यात् तर्हि महान् अनर्थः सम्भवेत्'' इति उच्चैः अवदत् ।

जयशीलः गजस्य उपरि उपविष्टः एव अवनम्य खड्गं भिल्लभीमस्य समीपे गृह्णन् आज्ञापयत् - ''स्वजनान् भवान् आदिशतु यत् झटिति एव प्रतिगन्तव्यम् इति'' इति ।

तदा भिल्लभीमः भयेन कम्पमानः अवदत् - ''कृपया खड्गेन मां मा पीडयतु कृपया । भवतः खड्गस्य तीक्ष्णता अधिका'' इति ।

''अये भीम ! मया किम् आदिष्टम् ?



भवता च किं क्रियमाणम् अस्ति ?'' इति पृच्छन् जयशीलः खड्गेन भीमस्य पृष्ठभागे लघुतया विद्धवान् ।

एतस्मात् पीडाम् अनुभवन् हस्तौ पादौ च इतस्ततः चालयन् भीमः भिल्लबन्धून् उद्दिश्य – ''भोः भोः, आक्रमणं न क्रियताम् । एषः मकरमुखः राज्ञः जनः अस्ति । अतः केनापि सः न पीडनीयः'' इति उच्चस्वरेण अवदत् ।

''एवं तर्हि रक्तेन पादौ क्षाल्येते इत्येतस्याः मम प्रतिज्ञायाः का गतिः जाता ? अहं तूष्णीं न स्थास्यामि । अहं काली अस्मि । अहं महाकाली अस्मि । अहं तस्य पिशाचस्य रक्तं पिबेयम् एव । बलिः इष्यते मया । रक्तबलिः इष्यते'' इति वदन् गणाचार्यः जलग्रहस्य दिशि गतवान् ।

तदा जयशीलः झटिति गजात् अवतीर्य गणाचार्यं केशेषु गृहीतवान् । ततः तं तर्जयन् – ''अये वराक ! महावञ्चक ! किं महाकाली वस्तुतः अपि भवति आविष्टा अस्ति ? अहं जानामि – एतत्सर्वं सुरापानस्य फलम् इति । सुरापानेन उन्मत्तः भवान् एवं व्यवहरन् अस्ति । सर्वमप्येतत् अभिनयमात्रम्'' इति क्रोधेन अवदत् ।

''महाकालि ! मां रक्षतु भवती । मां रक्षतु'' इति उच्चैः आक्रोशनं कृतवान् गणाचार्यः । अत्रान्तरे केचन अश्वारोहिणः तत्र आगत्य सर्वान् आवृत्य स्थितवन्तः ।

जयशीलः झटिति अभिज्ञातवान् यत् एते अश्वारोहिणः राजपक्षीयाः इति । अतः सः तान् अवदत् – ''भोः, गजस्य उपरि स्थितः मकरमुखः अस्माभिः बन्दीकृतः अस्ति । सः यथा पलायनं न कुर्यात् तथा द्रष्टव्यं भवद्भिः'' इति ।

अश्वारोहिणः मकरकेतुं जलग्रहं च दृष्ट्वा नितराम् आश्चर्यचकिताः । ते क्षणकालं निर्वचनाः जाताः । ततः ते जयशीलं पृष्टवन्तः – ''कः एषः ? एषः कोऽपि राक्षसः, उत पिशाचः ?'' इति ।

''न अयं राक्षसः, न वा पिशाचः । तथापि एतस्य जातिः का इति कथनं कष्टाय एव'' इति उक्तवान् जयशीलः ।

एतदभ्यन्तरे सिद्धसाधकः गणाचार्यं गृहीत्वा दूरं नीतवान् । ततः धनुर्बाणादिकं गृहीत्वा आक्रमणाय सिद्धान् भिल्लजनान् उद्दिश्य – ''एषः वञ्चकः, महाकपटः च । कालीमाता एतस्मिन् आविष्टा नास्ति सर्वथा । असत्य-वादिनम् एतं बाणप्रयोगैः मारयन्तु भवन्तः'' इति आदिशत् ।

एतत् श्रुत्वा गणाचार्यः भीत्या कम्पमानः सन् तदैव तत्र उपस्थितस्य जयशीलस्य पादौ गृहीत्वा – "प्रभो ! एते भिल्लाः आदेशपालकाः । यथा आदिश्यते तथा कुर्वन्ति एते फलाफलम् अविचिन्त्य । अतः तान् बाणप्रयोगात् निवारयतु कृपया । अन्यथा एते मम शरीरं छिन्नविच्छिन्नं कुर्युः" इति प्रार्थयत् ।

तदा जयशीलः भिल्लान् उद्दिश्य – "भोः, अलं बाणप्रयोगेण । एषः न मारणीयः भवद्भिः" इति आदिश्य सिद्धसाधकम् उद्दिश्य अवदत् – "किम् एतत् क्रियते भवता ? एतस्य दण्डनाय भवतः कः अधिकारः ? किं भवान् राजा, उत राज्ञा नियुक्तः कोऽपि दण्डाधिकारी ? किम् एषा अस्थाने प्रवृत्तिः भवतः ?" इति ।

तत्र किं प्रवर्तमानम् अस्ति इति अजानन्तः अश्वारोहिणः जयशीलम् उक्तवन्तः – "आर्य ! जयशीलनामकः किं भवान् एव ? अनतिदूरे एव पर्वतीयसरोवरस्य तीरे मन्त्रिवर्यः उपस्थितः अस्ति । भवन्तम् अन्विष्य अरण्यम् आगतः अस्ति सः" इति ।

"सेनापतिवर्य ! अत्र आगच्छता युक्तं कृतं भवता । अहम् अस्मि सिद्धसाधकः । अहं जयशीलः च युवराज्ञीयुवराजयोः अपहरणकर्तुः अन्वेषणं कुर्वन्तौ अत्र आगतौ । तयोः अपहरणकर्ता अस्ति अयं विचित्रमुखधारी एव । अरण्ये सर्वत्र अटित्वा आवाम् एतं गृहीतवन्तौ स्वः" इति अवदत् सिद्धसाधकः ।

सेनानायकः मकरकेतुं तीक्ष्णदृष्ट्या दृष्ट्वा अवदत् – "एषः विलक्षणः भीतिजनकः चापि । एतस्य उदरे खड्गः संलग्नः अस्ति ।



स्कन्धे बाणः संलग्नः अस्ति । खड्गं बाणं च एषः आभूषणम् इव धरति । विलक्षणं दृश्यम् एतत्" इति ।

"न तौ आभूषणायेते, प्रत्युत प्राणहारकायेते" इति वदन् जलग्रहस्य पृष्ठभागतः अग्रे आगतवान् वीरः ।

जयशीलः अचिन्तयत् यत् अत्र समययापनं व्यर्थम् इति । अतः सः मकरकेतुम् अवदत् – "भवान् स्वरक्षाविषये निश्चिन्तः भवतु । कनकाक्षराजः मन्त्रिणम् अत्र प्रेषितवान् अस्ति । वयं तत्र गच्छाम तावत्" इति ।

भीमः गणाचार्यं तीक्ष्णदृष्ट्या सकृत् दृष्ट्वा पार्श्वस्थस्य अश्वारोहिणः हस्तात् खड्गम् आकृष्य उच्चस्वरेण – "अये गणाचार्य ! मम कुक्कुटः क्व ? सः अपहृतः अस्ति भवता एव । सः कुत्र अस्ति इति वदतु । अन्यथा ..." इति अगर्जत् ।



गणाचार्यः महतीं भीतिं प्राप्य - ''अहो ! एषः भूताविष्टः अस्ति । अतः इदानीम् अत्र स्थितिः अपायकरी एव । धावन्तु, भोः धावन्तु'' इति उच्चैः उक्त्वा परिवृत्य धावनम् आरब्धवान् । तम् अनुसृत्य अन्ये भिल्लाः अपि धावितवन्तः । भीमः अपि शूलं गृहीत्वा तान् अनुसृत्य धावितवान् ।

''अहो, वयं रक्षिताः ! भिल्लानां गणः इतः अपगतः ! अतः अपायोऽपि अपगतः'' इति अवदत् सिद्धसाधकः उच्चैः हसन् ।

एतत्सर्वम् आश्चर्येण पश्यन् सेनानायकः जयशीलम् अवदत् - '' आर्य ! वयम् इतः प्रस्थानं करवाम खलु ?'' इति ।

जयशीलः चरकाचार्यं वीरं च स्वसमीपम् आहूय - ''अग्रे गमनाय मार्गं दर्शयताम् । महामन्त्री भवतोः ग्रामस्य समीपे उपस्थितः अस्ति'' इति अवदत् ।

''अहो परमसौभाग्यम् ! मन्त्रिवर्यस्य उपस्थित्या अस्मद्ग्रामपरिसरः पूतः जातः । वयं मकरकेतोः चिकित्सां करिष्यामः ग्रामे । तेन अस्माकं ग्रामः प्रशंसापात्रतां यास्यति । तेन आवयोः शस्त्रचिकित्सानैपुण्यं समग्रे देशे प्रसिद्धं भविष्यति'' इति उत्साहेन अवदत् चरकाचार्यः ।

''चरकाचार्यवर्य ! युक्तम् उक्तं भवता । शस्त्रचिकित्सायां सफलता प्राप्ता चेत् आवां निश्चयेन राजवैद्यपदवीं प्राप्स्यावः । आवयोः भाग्यं फलिष्यति अचिरात् एव'' इति महता सन्तोषेण अवदत् वीरः ।

''भवन्तौ राजवैद्यपदं प्राप्स्यतः वा न वा इति तु अहं न जानामि । किन्तु एतत् तु निश्चयेन जानामि यत् यदि भवन्तौ एतस्य मकरमुखस्य प्राणानां रक्षणे असफलौ भविष्यतः तर्हि भवतोः शिरः भूमौ पतिष्यति इति'' इति अवदत् जयशीलः ।

एतत् श्रुत्वा सिद्धसाधकः उच्चस्वरेण - ''तत् कार्यं मन्त्रिवर्यः मह्यम् अर्पयिष्यति । अहं मन्त्रोच्चारणेन महाशक्तिम् आवाह्य महाकालाय एतौ बलिरूपेण अर्पयिष्यामि । तेन जगतः कल्याणं भविष्यति'' इति अवदत् ।

''कस्य बलिः केन क्रियते इत्यादिकम् अनन्तरं निर्णेतुं शक्यम् । इदानीं प्रस्थानं करवाम तावत्'' इति मन्दहासपूर्वकम् उक्तवान् जयशीलः ।

ततः अर्धघण्टाभ्यन्तरे ते सर्वे मन्त्रिणः शिबिरं प्राप्तवन्तः । मन्त्री धर्ममित्रः सर्वान् सकृत् दृष्ट्वा जयशीलम् उद्दिश्य आदरेण अवदत् - ''राज्ञः अपत्ययोः अपहरणकर्ता

भवता गृहीतः यत् तदर्थं भवते अनेके धन्यवादाः समर्प्यन्ते । राज्ञः अपत्यद्वयम् एतेन कुत्र स्थापितम् इति किं भवता किमपि ज्ञातम् ? '' इति ।

जयशीलः प्रवृत्तं सर्वं सङ्क्षेपेण निवेद्य अवदत् - ''मन्त्रिवर्य ! एषः मकरकेतुः इदानीं शारीरक्या मानसिक्या च पीडया ग्रस्तः अस्ति । अतः मया अपहरणविषये विचारणा न कृता एतावता अपि । मार्गे उपस्थितान् विघ्नान् निवार्य इदानीम् अत्र उपस्थितः अस्मि । इतःपरं मकरकेतोः शरीरे लग्नम् आयुधम् अपनीय शस्त्रचिकित्सायाः व्यवस्था करणीया अचिरात् । यदा व्रणादयः उपशान्ताः भवेयुः तदा विचारणा कर्तुं शक्या'' इति ।

मकरकेतुः एतत् सम्भाषणं कुतूहलेन शृण्वन् आसीत् । सः जयशीलम् अवदत् - ''आर्य ! मम एषः गजः जलग्रहः नितरां पिपासापीडितः अस्ति । अतः अहम् एतं सरोवरं नीत्वा जलं पाययितुम् इच्छामि'' इति ।

एतत् श्रुत्वा जयशीलः अचिन्तयत् - 'पलायनोद्देशेन एषः एवं वदन् स्यादपि । क्षणकालम् अपि एषः अस्माकं नियन्त्रणतः बहिर्भूतः न स्यात् । कः कीदृशः इति केनापि न ज्ञायते' इति । अतः सः मकरकेतुम् अवदत् - ''भवतु नाम । किन्तु तदवसरे अहं सिद्धसाधकश्चापि भवता सह गजस्य उपरि उपविष्टौ भवावः । यदि वञ्चनामार्गः कोऽपि आश्रीयेत तर्हि किं फलं भवेत् इति भवान् जानाति एव'' इति । ततः सः गजम् आरुह्य उपविष्टवान् । सिद्धसाधकः अपि गजम् आरूढवान् । ततः गजः प्रस्थितः ।

मकरकेतुः सरोवरमध्यं प्रति जलग्रहं नीतवान् । ततः जयशीलम् उद्दिश्य - ''जयशील ! मरणात् आत्मनः रक्षणं न शक्यते इति भासते । मरणं चिकित्सातः पूर्वम् अनन्तरं वा निश्चितम् एव प्रायः । अतः एषोऽहं साहसं करिष्यामि'' इति उक्त्वा - ''हे मायासरोवरेश्वर ! रक्षतु माम् । जलग्रह, जले निमज्ज्य अग्रे सरतु'' इति आदिशत् ।

अनन्तरक्षणे जलग्रहः जयशील-सिद्धसाधकाभ्यां सह जले निमग्नः जातः ।

*- (अनुवर्तते)*



# किं वा वैशिष्ट्यम् ?

''पञ्चाशत् दीनाराः एतस्य शुकस्य कृते । आगच्छन्तु पञ्चाशद्दीनारैः सुन्दरम् अपूर्वम् एतं पक्षिणं क्रीणन्तु'' इति कश्चन वणिक् विपण्यां वदन् आसीत् । तत्काले होजः स्वस्य गर्दभस्य उपरि उपविश्य सञ्चरन् तत्र आगतः । तस्य शुकविक्रेतारं परितः कुतूहलिनां समूहः एव दृश्यते स्म ।

नसीरुद्दीनहोजः जनान् निवारयन् तस्य शुकविक्रेतुः समीपं गतवान् । तेन वणिजा विक्रीयमाणः सः शुकः सामान्यः इव दृश्यते स्म, यस्य च मूल्यम् इतरेषु आपणेषु पञ्चदीनारात्मकं स्यात् । 'किमर्थम् एषः वणिक् एतावत् अधिकं मूल्यं वदन् अस्ति' इति तेन न ज्ञातम् ।

अतः सः तं वणजम् एव अपृच्छत् – ''भोः मित्र ! भवान् एतस्य मूल्यं ५० दीनाराः इति वदन् अस्ति खलु ? एतस्य किं तादृशं वैशिष्ट्यम् अस्ति ?'' इति ।

''भोः, एषः न सामान्यः शुकः । मार्गे यादृशः प्राप्येत तादृशः न एषः । एतस्य अनितरसाधारणं वैशिष्ट्यम् अस्ति'' इति सगर्वम् उक्तवान् सः वणिक् ।

''तदेव वैशिष्ट्यं किम् इति मम प्रश्नः । दर्शनात् तु भासते यत् एषः इतरसाधारणः एव इति'' इति अवदत् होजः ।

''एतस्य वैशिष्ट्यं यत् एषः वक्तुं समर्थः अस्ति'' इति अवदत् शुकविक्रेता ।

प्रतिवचनं किमपि अवदन् होजः ततः स्वगृहं प्रतिगतवान् । स्वगृहे स्थितं टर्कीकुक्कुटं स्वीकृत्य पुनरपि विपणिम् आगतवान् च । शुकविक्रेतुः पार्श्वे स्थित्वा सः उच्चैः अवदत् – ''आगच्छन्तु, शतेन दीनारैः एतम् अपूर्वं पक्षिणं क्रीणन्तु'' इति ।

एतत् श्रुत्वा सः शुकविक्रेता आश्चर्येण स्तब्धः । सः होजसमीपम् आगत्य अपृच्छत् – ''भवतः समीपे विद्यमानः टर्कीकुक्कुटः तु अतिसामान्यः । तथापि एतस्य तावत् मूल्यं वदन् अस्ति भवान् ? भवतः एतस्य कुक्कुटस्य किं वैशिष्ट्यम् ?''

''भवतः शुकस्य एव ५० दीनाराः । एवं स्थिते मम कुक्कुटस्य शतं दीनाराः कुतो न स्युः ?''



इति प्रतिप्रश्नं कृतवान् होजः ।

''मम शुकः वक्तुं समर्थः । भवतः कुक्कुटः तु सामान्यं ध्वनिं कुर्यात् । तस्य तावत् मूल्यं किमर्थम् ?'' इति अवदत् शुकविक्रेता ।

''किमर्थम् इति ? मम कुक्कुटः न वदेत् नाम । किन्तु सः सम्भाषणात् अपि श्रेष्ठं चिन्तनं करोति । चिन्तनम् एव एतस्य वैशिष्ट्यम्'' इति उक्तवान् होजः ।

## वेताल-कथा

# सत्यान्वेषकः

दृढव्रती त्रिविक्रमः पुनरपि वृक्षस्य समीपं गत्वा वृक्षम् आरुह्य शाखायां लम्बमानं शवं स्कन्धे आरोप्य अधः आगत्य यथापूर्वं मौनेन श्मशानं प्रति प्रस्थितवान् । तदा शवान्तर्गतः वेतालः अवदत् - ''अये राजन् ! अज्ञान-मूर्खतादीनां काचित् सीमा भवति । भवान् तु तां सीमाम् अपि अतिक्रान्तः इति भासते । भवतः लक्ष्यं किम् इति मया बहुवारं पृष्टम् । किन्तु भवान् उत्तरं न दत्तवान् । तादृशाः मया बहवः दृष्टाः ये च ज्ञानिनः, तपस्सम्पन्नाः, विवेकिनः च सन्तोऽपि निर्णयस्वीकारविषये प्रमादं कृतवन्तः । एतस्मात् ते लक्ष्यं प्राप्तुं न शक्तवन्तः । भवान् तादृशः न भवेत् इति मम अपेक्षा । योग्ये मार्गे



भवतः प्रवर्तनं मम कर्तव्यम् । भवति विवेकजागरणाय शशाङ्कनामकस्य कथां श्रावयामि । श्रद्धया शृणोतु तावत्'' इति ।

ततः वेतालेन कथा आरब्धा -

शशाङ्कः सुवर्णपुर्याः राजपुरोहितस्य प्रीतिपात्रपुत्रः । आ बाल्यात् एव प्रापञ्चिक-विषयेषु शशाङ्कस्य रुचिः न आसीत् । गच्छता कालेन तस्य विरक्तिः प्रवृद्धा । सः अरण्यं गत्वा तपः आरब्धवान् ।

कानिचन वर्षाणि तेन तपः कृतम् । तदङ्गतया तेन कन्दमूलफलादीनां सेवनस्यापि परित्यागः कृतः । तुलसीजलं पीत्वा सः जीवनं यापयति स्म । तपसा सः अनेकसिद्धीः प्राप्तवान् । जलस्य उपरि सञ्चारः, वायौ उड्डयनम् इत्यादिकं कर्तुं समर्थः आसीत् सः । सः जानाति स्म यत् एताः सिद्धयः न महत्त्व-भूताः इति । मृत्योः जयार्थम् अपेक्षिता शक्तिः एव महाशक्तिः इति सः ज्ञातवान् आसीत् । अतः तस्याः शक्तेः सम्पादनाय सः पुनरपि तपसि लीनः जातः ।

शशाङ्कस्य तपसः कारणतः गन्धर्वलोके महान् कोलाहलः उत्पन्नः । तदीयं तपः तेषु भयम् अजनयत् । 'मम सिंहासनं स्वायत्ती-कर्तुम् एव एषः तपसि लीनः अस्ति' इति अचिन्तयत् गन्धर्वराजः । 'यदि शशाङ्कद्वारा किमपि पापं कारयेयं तर्हि एव तदीयं तपः निष्फलं भवेत्' इति विचिन्त्य गन्धर्वराजः एतदर्थम् एकां योजनां कृतवान् ।

गन्धर्वराजः दैवज्ञवेषेण सुवर्णपुरीं गत्वा राजानम् अवदत् - ''राजन् ! भवतः पुत्रः स्वर्णकीर्तिः सम्राट् भवितुम् अर्हति । कस्यचित् लघुविघ्नस्य कारणतः तेन इतोऽपि तत् पदं न प्राप्तम् । तस्य विघ्नस्य निवारणं पितुः भवतः कर्तव्यं खलु ?'' इति ।

''आम् । तस्य कर्तव्यस्य निर्वहणे अहम् आसक्तः अस्मि अपि । अतः वदतु - एतदर्थं मया किं करणीयम् इति'' इति अवदत् राजा ।

''सर्वजीवकोटिम् आहुतिरूपेण समर्प्य कश्चन यागः करणीयः भवता । भवतः राज्ये यावत्यः पशुपक्षिजातयः सन्ति ताः सर्वाः एतस्मिन् यज्ञे बलिरूपेण अर्पणीयाः'' इति अवदत् दैवज्ञः ।

''भवतु नाम'' इति अङ्गीकारं सूचितवान् राजा ।

''किन्तु कश्चन नियमः'' इति अवदत् दैवज्ञः ।

''कः सः ? विस्तरेण वदतु तावत्''

इति अवदत् राजा ।

''पशुवलिः सामान्येन जनेन अर्पितः चेत् न कोऽपि लाभः । महातपस्विना तत् करणीयम् । स च महातपस्वी वर्षाधिककालं यावत् तुलसीजलमात्रं सेवितवान् स्यात्'' इति अवदत् दैवज्ञः ।

''तादृशः महातपस्वी कुत्र प्राप्येत ?'' इति राजा चिन्तामिश्रितस्वरेण अपृच्छत् ।

''प्रयत्नेन सर्वं साधयितुं शक्यम् । प्रयत्नं करोतु, फलं प्राप्स्यते'' इति उक्त्वा ''इष्टार्थ-सिद्धिरस्तु'' इति आशीर्वादं च कृत्वा ततः निर्गतवान् दैवज्ञः ।

'पुत्रः सम्राट् भवेत्' इति प्रस्तावः एव राज्ञः सन्तोषाय जातः आसीत् । 'कथमपि यज्ञः समापनीयः एव' इति निश्चितवान् सः । सः आज्ञां कृतवान् यत् देशे यावन्तः पशु-पक्षिप्रकाराः सन्ति तान् सर्वान् गृहीत्वा आनीय यज्ञसन्नाहः करणीयः इति । एतद्विषये राज्ये सर्वत्र घोषणा अपि कारिता । 'वर्षं यावत् तुलसीजलमात्रं सेवितवान् तपस्वी कुत्रापि दृष्टः चेत् राजा सूचनीयः' इत्यपि घोषणं कारितम् ।

एतस्याः घोषणायाः अनन्तरं सप्ताहाभ्यन्तरे कश्चन भिल्लः राजदर्शनं कर्तुम् आगतः । सः उक्तवान् यत् मया अरण्ये तुलसीजलमात्रसेवी महातपस्वी कश्चन दृष्टः इति ।

एतत् श्रुत्वा राजा मन्त्रिणम् आहूय अवदत् - ''भवान् अद्यैव अरण्यं गत्वा तं तपस्विनं दृष्ट्वा कथमपि अत्र आनयतु'' इति ।

मन्त्री शशाङ्कं दृष्ट्वा सर्वं निवेद्य अवदत् - ''एतस्मात् यज्ञात् देशस्य जनानां च हितं सेत्स्यति । भवतः सहकारः यदि स्यात् तर्हि



एव एतत् सम्भवेत् । भवान् यत् इच्छति तत् दातुं सिद्धः अस्ति राजा । भवन्तं प्रधान-मार्गदर्शकपदे नियोक्तुम् अपि सिद्धः अस्ति सः । भाविपरम्परा भवतः प्रशिक्षणं प्राप्नुयात्, उत्तमनागरिकाश्च निर्मिताः भवेयुः । एतदर्थं भवतः आश्रमस्य पार्श्वे एव विशालं गुरुकुलं व्यवस्थापयिष्यति राजा'' इति ।

किन्तु शशाङ्कः प्रधानमन्त्रिणः प्रस्तावं निराकुर्वन् अवदत् - ''यज्ञव्याजेन पशूनां मारणं पापाय । एतत् पशुमारणम् अहं सर्वथा न अङ्गीकरोमि'' इति ।

''राजा भवतः निमित्तं प्रशान्ते उद्याने भव्यं भवनं निर्मास्यति । तत्र सर्वविधानि सुखानुकूल्यानि अपि भविष्यन्ति'' इति अवदत् मन्त्री ।

''अहं तपस्वी अस्मि । एतदेव जीवनं



सुखदायकम् अस्ति मम । लक्ष्यप्राप्त्यर्थम् एतत् अरण्यम् एव अनुकूलकरम् अस्ति'' इति दृढस्वरेण अवदत् शशाङ्कः ।

मन्त्री निराशः सन् राजधानीं प्रति गतवान् । अरण्ये प्रवृत्तं सर्वं राजानं निवेदितवान् च ।

तदा राजा अवदत् - ''भवान् पुनरपि तस्य समीपं गत्वा वदतु यत् राजकुमारी दास्यते, विवाहानन्तरं समग्रं राज्यम् अपि दास्यते इति । कथमपि सः अत्र आनेतव्यः एव'' इति ।

राजकुमारी पितुः वचनानि श्रुत्वा आश्चर्यचकिता अभवत् । तस्याः मनोभावम् अवगत्य राजा अवदत् - ''वत्से ! अलं भीत्या । आदौ यज्ञः समाप्तः भवतु । अनन्तरकाले यत् करणीयं तत् अहं करिष्यामि'' इति ।

पितुः कुटिलव्यवहारः राजकुमार्याः प्रीत्यै न जातः । तथापि जनतायाः कल्याणं मनसि निधाय सा मौनेन स्थितवती ।

सा अपि मन्त्रिणा सह अरण्यं गतवती । मन्त्री अरण्यं गत्वा शशाङ्कम् अवदत् - ''महात्मन् ! यदि भवान् यज्ञं निर्वर्तयेत् तर्हि राजकुमारी भार्गवी भवतः धर्मपत्नी भवेत् । राजा मार्तण्डवर्मा भवन्तं सुवर्णपुर्याः राजानं करिष्यति । एतत्सर्वं राज्ञा प्रतिज्ञातम् अस्ति'' इति ।

शशाङ्कः सकृत् युवराज्ञीम् अपश्यत् । तस्यां लग्नां दृष्टिं सः अन्यत्र नेतुं न अशक्नोत् । यतः तस्याः सौन्दर्येण सः व्यामुग्धः जातः आसीत् ।

सः स्वकीयं लक्ष्यं विस्मृत्य मन्त्रिणम् अवदत् - ''एतस्य सौन्दर्यराशेः परिणयः सम्मतः मम । राज्यभारम् अपि अहं निर्वक्ष्यामि'' इति ।

ततः सुवर्णरथे उपविश्य त्रयः अपि राजधानीम् आगतवन्तः ।

यज्ञशाला सिद्धा । सहस्रशः पशुपक्षिणः विशालं प्राङ्गणं प्रति आनीताः । राजा मन्त्री च खड्गधारिणा शशाङ्केन सह तत्र गताः । यज्ञकुण्डस्य पार्श्वे एव बलिरूपेण समर्पणाय गजः आनीय स्थापितः । शशाङ्कः खड्गम् उन्नीतवान् । गजः भीत्या घीङ्कारम् अकरोत् । एतत् दृष्ट्वा तत्र स्थिताः सर्वे पशुपक्षिप्रभृतयः करुणक्रन्दनं कृतवन्तः ।

एतत् श्रुतवान् शशाङ्कः दिग्भ्रान्तः सन् खड्गं पार्श्वे क्षिप्तवान् । ततः राजानं पश्यन् अवदत् - ''प्रभो ! क्षन्तव्यः अहम् । एतत्

पापकार्यं मया कर्तुं न शक्यते । पापकार्ये प्रवर्तनीयम् इति इच्छा उत्पन्ना यत् तदर्थं प्रायश्चित्तं करिष्यामि । इतः निर्गमनाय अनुज्ञा दातव्या भवता'' इति उक्त्वा मुखम् अवनमय्य जनान् अपसारयन् अग्रे गत्वा वनस्य मार्गम् आश्रितवान् ।

वेतालः एवं कथां समाप्य अवदत् - ''राजन् ! शशाङ्कः वैराग्यं प्राप्य खलु अरण्यं गतवान् आसीत् ? तादृशः सः राजकुमार्याः अपूर्वसौन्दर्यं दृष्ट्वा कथं वा व्यामुग्धः जातः ? राजत्वरूपेण प्रलोभनेन वशीकृतः सः पशुन् बलिरूपेण समर्पयितुम् अपि सन्नद्धः जातः कथम् ? तादृशस्य मनः बलिसमर्पणावसरे किमर्थं परिवृत्तम् ? किं शशाङ्कः चञ्चल-चित्तः ? किमर्थं वा तेन लक्ष्यच्युतिः प्राप्ता ? मम एतेषां प्रश्नानां समाधानं जानन् अपि यदि भवान् न वदेत् तर्हि भवतः शिरः सहस्रधा भग्नं भवेत्'' इति ।

तदा मौनेन स्थातुम् अशक्तः राजा अवदत् - ''शशाङ्कस्य मनसि आकस्मिकपरिवर्तनं यत् दृष्टं तस्य कारणं भयं, मनसः चञ्चलता वा न । सः प्रापञ्चिकविषये अनासक्तः आसीत् इति न विस्मर्तव्यम् अस्माभिः । राजकुमार्याः दर्शनमात्रेण तस्मिन् विशिष्टाभिरुचिः जागरिता । अतः सः मन्त्रिणा राजकुमार्या च सह राजधानीम् आगतवान् । अत्र गन्धर्वाणां हस्तक्षेपः एव कारणम् । ते तस्य मनसि भ्रमम् उत्पादितवन्तः आसन् । स्वस्य मनसि भ्रमः उत्पद्यमानः अस्ति इति तेन न अवगतं यत् तत् तु दौर्भाग्यकरम् एव । भ्रमवशीभूतः सः एतत्सर्वं कृतवान् आसीत् । किन्तु यदा गजस्य घीङ्कारः श्रुतः, अन्य-पशुपक्षिणां करुणक्रन्दनं यदा श्रुतं, तदा तदीयः भ्रमः झटिति अपगतः । भ्रमस्य अपगमनसमनन्तरम् एव सः ज्ञातवान् यत् कीदृशं पापं क्रियमाणम् आसीत् इति । अतः सः राजानं क्षमां सम्प्रार्थ्य प्रायश्चित्ताय लक्ष्यप्राप्तये च तपः कर्तुम् इच्छन् अरण्यं प्रति गतवान्'' इति ।

एवं वदता राज्ञा मौनव्रतस्य भङ्गः कृतः आसीत् । उपायेन राज्ञः मौनभङ्गं साधयितुं समर्थः वेतालः परमसन्तुष्टः सन् शवसहित-तया ततः अदृश्यः भूत्वा यथापूर्वं वृक्षस्य शाखाम् अवलम्बितवान् ।



# भगवता सह द्यूतक्रीडा



कस्मिंश्चित् नगरे द्यूतकराणां गणः कश्चन आसीत् । किन्तु सोमदत्तसदृशः तेषु कोऽपि न आसीत् । सोमदत्तः अनाथः । यदि सः द्यूते रतः भवति तर्हि जयः तस्य एव । अतः अन्ये द्यूतकराः तेन सह क्रीडनम् उपायेन निवारयन्ति स्म । सोमदत्तः तु उदारः । यस्मिन् क्रीडाकेन्द्रे तेन क्रीडितं तस्य किमपि साहाय्यं करोति स्म एव सः ।

नगरात् बहिः कस्याञ्चित् गुहायां कश्चित् मुनिः निवसति स्म । तस्य विषये सोमदत्तस्य विशेषादरः । सः कदाचित् फलादीनि कथञ्चित् क्रीत्वा संन्यासिने अर्पयित्वा उक्तवान् - ''अहम् अज्ञानी मूर्खः च । भगवतः स्तुतिः कथं करणीया इति अहं न जानामि । कृपया भगवान् कथं तर्पणीयः इति मां वदतु'' इति ।

तदा संन्यासी अवदत् - ''वत्स ! स्वस्य अज्ञानस्य कारणतः चिन्ता करणीया नास्ति भवता । सर्वदा भगवन्नाम स्मरतु । यत् कार्यं भवान् करोति तत् भगवते अर्पयतु । भगवान् भवन्तं रक्षिष्यति'' इति ।

द्यूतः एव सोमदत्तस्य आयस्य मूलम् । वर्षाकाले कदाचित् सः बहूनि द्यूतकेन्द्राणि गतवान् । किन्तु द्यूतकराः तस्मै तत्र अवकाशम् एव न दत्तवन्तः । सायङ्कालः जातः । सोमदत्तः नितरां बुभुक्षितः । अनाथस्य तस्य गृहं तु न आसीत् । इतस्ततः अटन् सः ग्रामात् बहिः स्थितम् एकं शिथिलदेवालयं गतवान् । सः शिवदेवालयः । तृणगुल्मादिभिः आवृतम् आसीत् तत् । सोमदत्तः मन्दिरस्य अन्तः गतवान् । मन्दः दीपप्रकाशः आसीत् तत्र । तस्मिन् प्रकाशे तेन दृष्टं यत् विग्रहस्य पुरतः नैवेद्यरूपेण स्थापितं किञ्चित् अस्ति इति ।

सोमदत्तः देवं नमस्कृत्य अवदत् - ''देव ! अहं नितरां बुभुक्षितः अस्मि । भवतः पुरतः यः प्रसादः अस्ति तं किमहं खादानि ?'' इति ।

'अस्तु' इति देवेन उक्तम् इव । अथवा

अनुवर्तमाना कथामाला

सोमदत्तः भावितवान् स्यात् यत् देवः तथा उक्तवान् इति । अतः सः तम् आहारं सन्तोषेण सेवितवान् ।

आहारप्राप्त्या सन्तुष्टः सः धन्यवादपुरस्सरं देवम् उक्तवान् – ''देव ! उपकृतवतः भवतः सन्तोषं कथम् अहं जनयानि ? अहं भवन्तं स्तोतुं, भवतः पुरतः गातुं च इच्छामि । किन्तु केवलया इच्छया किम् ? अहं द्यूतमात्रं जानामि, न स्तोत्रगानादिकम् । मुनिः वदति यत् यद्यत् क्रियते तत्सर्वं भगवते समर्पणीयम् इति । किमहं मम द्यूतकौशलं भवतः पुरतः दर्शयानि ? किन्तु अन्यं विना द्यूतः असाध्यः । प्रतिपक्षित्वेन एकः वा अपेक्षितः एव । तं विना अहं कथं वा द्यूतं क्रीडेयम् ?'' इति ।



क्षणकालं चिन्तनेन कश्चन उपायः तस्य मनसि स्फुरितः । सः सन्तोषेण पुनः अवदत् – ''भगवन् ! भवान् एव मम प्रतिपक्षी । मम दक्षिणहस्तः भवतः प्रातिनिध्यं वहति । वामहस्तश्च मत्प्रतिनिधित्वेन तिष्ठति । एवं चेत् द्यूतक्रीडा-प्रवर्तने न कोऽपि क्लेशः । एतत् सम्मतं खलु भवतः ?'' इति ।

भगवान् 'आम्' इति उक्तवान् इति भावयित्वा ततः सोमदत्तः द्यूतम् आरब्धवान् । वामहस्त-दक्षिणहस्तयोः क्रीडा । किञ्चित्कालानन्तरं दक्षिणहस्तस्य पराजयः जातः ।

तदा सोमदत्तः सन्तोषेण करताडनं कुर्वन् – ''देव ! भवान् पराजितः जातः । जयः मम एव । तथापि चिन्ता करणीया नास्ति । भवता ऐदम्प्राथम्येन खलु द्यूतः क्रीडितः ? अतः अल्पा कृपा प्रदर्श्यते । तथापि आवयोः सन्धेः अनुसारं मया भवतः किमपि वस्तु स्वीकरणीयम् । किं स्वीकरवाणि ?'' इति वदन् दीपप्रकाशं वर्धयित्वा परितः सर्वत्र दृष्टिं प्रसारितवान् । तत्र धातुभिः शिलाभिः च निर्मिताः विविधाः देवमूर्तयः आसन् । सः तासु अन्यतमां दुर्गामूर्तिं स्वीकृतवान् । 'अहो, सौन्दर्यम् एतस्याः मूर्तेः ! मम तु मातापितरौ न स्तः । अहम् एतां मातरं भावयिष्यामि । एतां गृहं प्रति नेष्यामि' इति स्वगतम् अवदत् सः ।

'तुत् तुत्' इति कोऽपि शब्दः तेन श्रुतः । तस्य तात्पर्यम् तेन एवम् अवगतम् – ''मूर्तेः नयनं न सुखकरम् । नयनानन्तरं अर्चकः व्यवस्थापनीयः । प्रतिदिनं नैवेद्यादिकं सज्जीकरणीयम् । तावदेव न, मूर्तेः अपहरणं कृतम् इति अपवादः श्रोतव्यः भवेत्, दण्डनमपि सम्मुखीकरणीयं स्यात्'' इति ।

''सत्यम् एतत्'' इति उक्त्वा सोमदत्तः तां मूर्तिं स्वस्थाने स्थापयित्वा देवम् अवदत् – ''किं मया रिक्तहस्ततया एव गन्तव्यम् ?'' इति

''वस्तुतः भवान् न मातरम् इच्छति, अपि तु पत्नीम् अभिलषति । एवं ननु ? अतः क्षणं प्रतीक्षताम् । मम पृष्ठतः स्थीयताम् । अचिरात् एव भवान् तादृशीं कन्यां द्रक्ष्यति, यादृशी भवता इतः पूर्वं न दृष्टा स्यात्'' इति ध्वनिः तेन श्रुतः । अथवा सः ध्वनिः श्रुतः इव सः अभावयत् ।

अतः सः विग्रहस्य पृष्ठतः अतिष्ठत् । सा च पूर्णिमारात्रिः । तिलोत्तमा नाम अप्सराः प्रतिवर्षं तस्यां रात्रौ शिवस्य पुरतः नृत्यसेवां करोति स्म ।



अतः एतस्याम् अपि रात्रौ सा आगत्य नृत्यम् आरब्धवती । सोमदत्तः ताम् आश्चर्येण अपश्यत् । यदा तस्याः नृत्यं समाप्तं तदा सः अग्रे आगत्य अवदत् - ''का भवती ? भवत्या अहं परिणेतव्यः । एवं शिवः माम् उक्तवान् अस्ति'' इति ।

तिलोत्तमा क्षणकालं यावत् सोमदत्तस्य मुखं विग्रहं च दृष्टवती । विग्रहात् काऽपि सूचना तया प्राप्ता इव । सा सोमदत्तम् अवदत् - ''अस्तु, गच्छाव'' इति । ततः तौ मन्दिरात् बहिः आगतवन्तौ । मेघाः अपगताः आसन् इत्यतः पूर्णः चन्द्रः आकाशे प्रकाशते स्म । सोमदत्तः चन्द्रप्रकाशे तस्याः सौन्दर्यं दृष्ट्वा आश्चर्येण स्तब्धः ।

सा अप्सराः मन्दहासपूर्वकं पृष्टवती - ''मम वासार्थं गृहम् आवश्यकं खलु ? किं भवतः गृहम् अस्ति ? मां पोषयितुं यद्यत् आवश्यकं तत्सर्वं किम् अस्ति भवतः ? किं सेविकाः सन्ति मम सेवायै ?'' इति ।

निराकरणपूर्वकं शिरः चालयन् अवदत् सोमदत्तः - ''न । मम गृहम् एव नास्ति । वराटिकामात्रसम्पत्तिः अपि नास्ति'' इति ।

''एतस्य अर्थः यत् भवान् न केवलं पत्नीम्, अपि तु गृहं, सम्पत्तिं चापि इच्छति इति । एवं ननु ?'' इति पृष्टवती अप्सराः ।

''आम्'' इति लज्जया उक्तवान् सोमदत्तः ।

''भोः, अलं चिन्तया । अहम् एतदर्थं व्यवस्थां करिष्यामि । किन्तु आवयोः विवाहः भवितुं न अर्हति । अप्सरःकुलीयायाः मानवकुलीयस्य च परस्परविवाहः असम्भवः'' इति उक्त्वा सा नेत्रे निमील्य क्षणकालं मौनेन स्थितवती । ततः मन्दस्वरेण सोमदत्तं किमपि उक्त्वा ततः अदृश्या अभवत् च ।

कानिचन दिनानि अतीतानि । तस्य देशस्य राजकुमारी कमलकुमारी विलक्षणरोगेण ग्रस्ता जाता । सा आत्मानं तिलोत्तमां वदति स्म । आहारसेवनादिकं सा निराकृतवती । इन्द्रस्य सभायाः अंशान् विस्तरेण वर्णयति स्म सा ।

कोऽपि वैद्यः तस्याः चिकित्सां कर्तुं न शक्तवान् । सा दिने दिने क्षीणतां गता । यदा सा आसन्नमरणा इव जाता तदा राजा उद्घोषणं कारितवान् यत् यः एतस्याः चिकित्सां कारयति सः यत् इच्छति तत् दास्यते इति ।

सोमदत्तः एकः एव राजकुमार्याः व्याधेः निवारणोपायं जानाति स्म । यदा सः चिकित्साभारं स्वीकरोति तदा एव राजकुमार्याम् आविष्टा तिलोत्तमा तां त्यजेत् ।

राजकुमारी राजराज्ञ्योः अद्वितीया पुत्री । अतः पुत्र्याः निमित्तं यत्किमपि कर्तुं सिद्धः आसीत् राजा । सोमदत्तः राजकुमार्याः चिकित्सार्थम् अग्रे आगतवान् । राजा राज्ञी च अश्रूणि स्रावयतः स्म । 'आवयोः पुत्र्याः इहलोकत्यागः निश्चितः' इति तयोः भावना आसीत् ।

सोमदत्तः तयोः समीपं गत्वा अवदत् - ''अहं राजकुमार्याः व्याधिं निवारयितुं शक्नोमि । तदर्थम् अपेक्षितम् उपायम् अहं जानामि । अतः

चिकित्सार्थम् अवकाशः दातव्यः कृपया'' इति ।

''अस्तु । किन्तु कश्चन नियमः अस्ति । यदि भवान् तस्याः चिकित्सायां विफलः भवेत् तर्हि तया सहैव भवता अपि परलोकः प्राप्तव्यः भवेत् । एतत् स्मर्तव्यं भवता'' इति अवदत् राजा ।

''यदि भवान् चिकित्सायां यशस्वी भवेत् तर्हि राजकुमार्या सहैव एतस्मिन् लोके जीवितुम् अर्हेत् । तन्नाम सा भवते दास्यते'' इति अवदत् राज्ञी ।

सोमदत्तः विनयेन राजानं नमस्कृत्य एतं नियमम् अङ्गीकृतवान् । सः राजानं प्रार्थितवान् यत् किञ्चित्कालम् अहं राजकुमार्या सह एकान्ते स्थातुम् इच्छामि इति । राज्ञा एतदर्थं व्यवस्था कारिता ।

सोमदत्तः एकान्ते राजकुमार्याः कर्णे अवदत् – ''आर्ये, तिलोत्तमे ! भवत्या मयि महान् अनुग्रहः प्रदर्शितः । इदानीं भवती एतां राजकुमारीं परित्यज्य गच्छतु । अन्यथा मम कथा समाप्ता भविष्यति'' इति ।

यदा तस्य कथनं समाप्तं तदा राजकुमारी नेत्रे उन्मीलितवती । सोमदत्तम् आश्चर्येण पश्यन्ती सा मृदुमधुरस्वरेण अवदत् – ''अहो आश्चर्यम् ! मया स्वप्ने यः दृष्टः सः भवान् मत्पुरतः एव अस्ति ! अहं कुत्र अस्मि ? मम किं जातम् आसीत् ?'' इति ।

''राजकुमारि ! मद्विषये भवत्या कीदृशः स्वप्नः दृष्टः ?'' इति पृष्टवान् सोमदत्तः । किन्तु राजकुमारी हासमात्रं प्रदर्शितवती, किमपि उत्तरं न दत्तवती ।

यद्यपि स्वप्नविषयं सा सोमदत्तं न उक्तवती, किन्तु मातरं तु उक्तवती एव । ''काचित् अप्सराः मम स्वप्ने आगत्य माम् उक्तवती – 'अहं गच्छन्ती अस्मि । भवत्याः भावी पतिः अचिरात् एव दृष्टिगोचरः भवति' इति । एतदनन्तरं सा अदृश्यतां गता'' इति । वस्तुतः भाविपतेः चित्रं तस्याः नेत्रयोः पुरतः नृत्यति स्म ।

ततः अल्पे एव काले राजकुमारीसोमदत्तयोः विवाहः महता वैभवेन सम्पन्नः । राजा जामातुः प्राप्त्या नितरां सन्तुष्टः आसीत् । सः वानप्रस्थाश्रमस्वीकारम् इच्छति स्म । अतः अनाथः सोमदत्तः राजसिंहासनम् आरूढवान् । सः तं प्राचीनं शिवदेवालयं पातयित्वा तस्मिन् एव स्थाने भव्यम् अपरं देवालयं निर्मापितवान् ।

तेन अपरम् अपि उत्तमं कार्यं कृतम् । किं तत् इति किं जानन्ति भवन्तः ? सः स्वराज्ये द्यूतस्य निषेधं कृतवान् । द्यूतकरेभ्यः तत्तस्य प्रतिभायाः अनुगुणं उद्योगदापनम् अपि व्यवस्थापितवान् सः ।





# देवः धर्मपक्षपाती

सोमनाथः मीरापुरसमीपे पर्वते स्थिते वरसिद्धिविनायकमन्दिरे उद्योगी । एकदा यदा सः प्रातः मन्दिरं प्रति प्रस्थितः तदा तस्य पत्नी अवदत् - ''अस्माकं पुत्री विवाहयोग्या अस्ति । अग्रिमे वर्षे अध्ययनाय पुत्रः नगरं गन्तुम् इच्छति । एतम् अंशम् अहम् इतः पूर्वं द्वित्रवारं स्मारितवती अस्मि अपि । भवतः आय अल्पः । सम्भाव्यव्ययानां निर्वाहः कथं भवेत् इत्येव चिन्ता मम'' इति ।

सोमनाथः विद्याभ्यासं समाप्य उद्योगस्य अन्वेषणं यदा कुर्वन् आसीत् तदवसरे एव ग्रामीणाः एकं सरोवरं निर्मापितवन्तः ग्रामस्य मध्ये । तदा एका गणेशमूर्तिः प्राप्ता तैः । कश्चन धनिकः तस्याः मूर्तेः निमित्तं मन्दिरं निर्मापितवान् । मन्दिरस्य व्यवस्थानिर्वहणकार्ये निरुद्योगी सोमनाथः नियुक्तः जातः । वेतनव्यवस्था अपि कल्पिता ग्रामीणैः ।

अल्पे एव काले मन्दिरस्य प्रसिद्धिः प्रवृद्धा । जनानां विश्वासः आसीत् यत् भक्तैः भक्त्या प्रार्थिताम् अपेक्षां वरसिद्धिविनायकः पूरयिष्यति इति । अतः दूरप्रदेशेभ्यः अपि जनाः देवदर्शनार्थम् आगच्छन्ति स्म । एतेन देवालयस्य आयः प्रवृद्धः । सोमनाथः दानपात्रे जनैः स्थापितं धनं गणयित्वा सुयोग्यक्रमेण रक्षति स्म । भक्तानां व्यवस्थादिनिमित्तं कोऽपि व्ययः करणीयः चेत् तस्यैव धनस्य उपयोगं करोति स्म । व्ययानन्तरम् अपि प्रभूतं धनं शिष्यते स्म । तत् धनं जागरूकतया रक्षति स्म सोमनाथः । जनाः सोमनाथस्य अर्थशुद्धिं कर्तव्यपरायणतां च विशेषतः श्लाघन्ते स्म ।

सिद्धिविनायकमन्दिरस्य कीर्तिः यथा यथा प्रवृद्धा तथा तथा सोमनाथस्य पारिवारिकदायित्वानि अपि प्रवृद्धानि । पुत्री प्राप्तवयस्का

जाता । पुत्रः उन्नताध्ययनापेक्षी जातः । किन्तु आयः तु यथापूर्वम् आसीत् । सः कुटुम्ब-व्ययनिर्वहणाय अपि अपर्याप्तः भवति स्म कदाचित् । एतत्सर्वं दृष्ट्वा पत्नी सुभद्रा चिन्ताक्रान्ता भवति स्म । एषा समस्या कथं परिहरणीया इति अहोरात्रं चिन्तयति स्म सा ।

सा इच्छति स्म यत् दानपात्रात् यत् धनं प्राप्यते तस्य कश्चन भागः परिवारपोषणाय उपयोक्तव्यः इति । सोमनाथः पत्न्याः एताम् अपेक्षां जानाति स्म । किन्तु एवं करणं सः न इच्छति स्म । पत्नी सुभद्रा पत्युः एतं स्वभावं जानती अपि पुनः पुनः पतिं वदति स्म यत् दानपात्रस्य धनस्य कश्चन भागः गृहार्थं व्ययीकरणीयः इति ।

पत्न्याः अनुरोधम् असहमानः सोमनाथः कदाचित् अवदत् - ''भवत्याः आशयः अवगतः अस्ति मया । अहं किञ्चित् विचिन्त्य मम निर्णयं वदामि । तदर्थं पञ्चषाणि दिनानि आवश्यकानि मम'' इति ।

एतस्याः घटनायाः दिनद्वयस्य अनन्तरं सोमनाथः यदा कार्यालये उपविश्य कार्यं कुर्वन् आसीत् तदा कश्चन कृषिकः शकटेन सपरिवारम् आगतः । सः आगमनसमये गोणीमितं तण्डुलम् अपि आनीतवान् आसीत् ।

''किं समर्पणप्रतिज्ञा कृता आसीत् भवता ?'' इति तं पृष्टवान् सोमनाथः ।

''आम् । मम प्राप्तवयस्का पुत्री काचित् अस्ति । सा विकलाङ्गा । तस्याः विवाहः कथम् इति अहं सर्वदा चिन्तयामि स्म । गते वर्षे यदा अहम् एतं देवालयम् आगतः आसं तदा भगवतः पुरतः प्रतिज्ञां कृतवान् आसं यत् यदि मम पुत्र्याः विवाहः भवेत् तर्हि सपरिवारम् आगत्य गोणीमितः तण्डुलः समर्पयिष्यते इति । भगवान् विनायकः मम इच्छां पूरितवान् । योग्यः वरः प्राप्तः मया ।



मम पुत्र्याः विवाहः प्रवृत्तः अपि । अतः समर्पणप्रतिज्ञां पूरयितुं सपरिवारम् आगतः अस्मि'' इति उक्तवान् कृषिकः ।

''महतः सन्तोषस्य विषयः'' इति अवदत् सोमनाथः । कृषिकस्य निर्गमनानन्तरम् अपि सोमनाथस्य मनसि चिन्तनं प्रवर्तते स्म । अन्ते तेन कश्चन निर्णयः कृतः ।

तस्मिन् दिने रात्रौ पत्नी सुभद्रा पतिं पृष्टवती – ''मया उक्तं स्मर्यते खलु ? किं निर्णीतं भवता ?'' इति ।

''अहं भवदपेक्षानुगुणं न व्यवहरिष्यामि'' इति दृढस्वरेण अवदत् सोमनाथः ।

''एवं तर्हि पुत्र्याः विवाहः कथं प्रवर्तेत ? पुत्रस्य उच्चाध्ययनं कथं सिद्ध्येत् ?'' इति क्रोधेन एव पृष्टवती सुभद्रा ।

तदा सोमनाथः शान्तस्वरेण एव अवदत् – ''अहं यत् वदामि तत् श्रद्धया शृणोतु । बहवः जनाः सुदूरात् अपि आगत्य अस्माकं स्वामिनः दर्शनं कुर्वन्ति । सः अभीष्टं पूरयिष्यति इति तेषां श्रद्धा । वयं तु तस्यैव सेवायां संलग्नाः । किम् अस्माकम् अभीष्टं न पूरयेत् सः ? यस्मिन् दिने देवमूर्तिः दृष्टिगोचरतां गता तस्मिन् एव दिने मया जीविकामार्गः प्राप्तः । तावान् अनुग्रहः मयि तेन प्रदर्शितः एव । एवं स्थिते दानपात्रतः धनं यदि अहं स्वीकुर्यां तर्हि पापी भवेयम् । एतत् अहं न इच्छामि । यदि अहं मम कर्तव्यं सम्यक् पालयेयं, पापकार्यं च न कुर्यां तर्हि भगवान् मयि कृपां कुर्यात् एव । धर्मः अस्माभिः रक्ष्यते चेत् वयं तेन रक्षिताः भवेम । परमेश्वरः सदा धर्मपक्षपाती'' इति ।

सुभद्रा प्रतिवचनं किमपि न उक्तवती । भगवति पत्युः श्रद्धा अचला अस्ति इति विचिन्त्य सा मौनम् आश्रितवती ।

सोमनाथस्य श्रद्धा व्यर्था न जाता । कस्यचित् मित्रस्य द्वारा पुत्र्याः निमित्तं योग्यः वरः प्राप्तः । अतः तस्याः विवाहः विना क्लेशं सम्पन्नः । पुत्रः अधिकान् अङ्कान् प्राप्तवान् आसीत् इत्यतः तदीययोग्यतायाः कारणतः उत्तमा छात्रवृत्तिः प्राप्ता । अतः तदीयम् उन्नताध्ययनम् आरब्धम् । एवं भगवतः सिद्धिविनायकस्य अनुग्रहस्य कारणतः सोमनाथस्य पारिवारिकं जीवनं सुखमयं जातम् ।



# भारतम् अवगम्यताम्

डा॰ राधाकृष्णवर्यस्य संस्मरणार्थं सप्टम्बर्मासे शिक्षकदिनम् आचर्यते । अतः एतस्य मासस्य प्रश्नाः शिक्षणतज्ज्ञान् शैक्षिकसंस्थाः च अधिकृत्य सन्ति । एतेषाम् उत्तरदाने प्रायः भवतां कोऽपि क्लेशः न भवेत् । अतः उत्तरदानार्थं प्रयतन्ताम् ।

१. कः भारतीयः गगनभौतशास्त्रज्ञः १९५५ तमे कोलकतानगरे 'इन्स्टिट्यूट् आफ् न्यूक्लियर् फिसिक्स्'नामिकां संस्थां संस्थापितवान् ?
२. १८५७ तमे वर्षे साधितस्य विजयस्य हेतोः भगवते धन्यवादसमर्पणाय शिमलानगरे यः विद्यालयः स्थापितः तस्य नाम किम् ?
३. भारतीयपरम्परा कं देवगुरुं भावयति ?
४. आधुनिकस्य 'π'इत्यस्य यत् मूल्यं तत् कः भारतीयः गणितशास्त्रज्ञः स्वग्रन्थे सूचितवान् आसीत् ?
५. रूर्के-विश्वविद्यालयस्य अपरं नाम आसीत् संस्थापनकाले । तत् नाम किम् ?
६. शेक्स्पियर्वर्यस्य कृतीनां सङ्ग्रहस्य प्रथमप्रकाशनस्य कृतयः विरललभ्याः । तादृशीं कृतिं स्वसमीपे स्थापितवती भारतीया शैक्षणिकसंस्था का ?
७. रवि. जे. मथाय्वर्येण गुजरातराज्ये संस्थापितायाः प्रमुखसंस्थायाः नाम किम् ?
८. मैसूरुविश्वविद्यालयस्य कश्चन उपकुलपतिः पाटियालासंस्थानस्य मन्त्री अपि आसीत् । सः 'सरदार'बिरुदं प्राप्तवान् आसीत् । तस्य नाम किम् ?

*(उत्तराणि अग्रिमे मासे)*

### *'अगस्ट्'मासस्य प्रश्नानाम् उत्तराणि*

१. षण्मुगं चेट्टि ।
२. डा॰ झाकीरहुसेनवर्यस्य । (एकं वर्षं, एकादश मासाः, विंशतिः दिनानि)
३. १९८९ तमे वर्षे ।
४. प्रधानमन्त्रिणा अटलबिहारी वाजपेयिवर्येण ।
५. ५० सदस्याः ।
६. उपसभापतिः ।
७. आन्ध्रप्रदेशः ।
८. माहे । पाण्डिचेरी-अधीनः ।
९. कर्णाटकस्य श्रवणबेळगोळं प्रति ।
१०. लकदीव्द्वीपः ।
११. जि. बि. पन्त् युनिवर्सिटि आफ् एग्रिकल्चर् ।
१२. 'दि डुराण्ड् कप्' इति ।
१३. शहीद् स्वराज् चेति ।
१४. लार्ड् कर्झन् ।



# कुम्भस्य निद्रा

श्यामस्य पत्नी रुक्मिणी । तौ ग्रामे वसतः । विवाहस्य बहोः कालस्य अनन्तरं ताभ्यां पुत्रः प्राप्तः । किन्तु आश्चर्यं नाम जातः शिशुः न रोदनं कृतवान्, न वा नेत्रे उद्घाटितवान् । एतत् दृष्ट्वा भीता धात्री तं चुटितवती । तस्मात् शिशौ अल्पं कम्पनं दृष्टं, न तु रोदनम् । क्षीरस्य पानार्थं तु सः मुखम् उद्घाटयति स्म ।

दिनानि गतानि । अष्टमे दिने तद्गृहं प्रति कश्चन संन्यासी आगतवान् । श्यामः पुत्रस्य विषयम् उक्त्वा प्रार्थितवान् - ''श्रीमन् ! अन्ये शिशवः इव मम पुत्रः अपि यथा हसेत् रुद्यात् च तथा करोतु कृपया'' इति ।

संन्यासी बालस्य जन्मनक्षत्रादिकं ज्ञात्वा अङ्गुलीभिः किमपि गणयित्वा अवदत् - ''महती चिन्ता कापि करणीया नास्ति । भवतः पुत्रे कुम्भकर्णस्य कश्चन अंशः अस्ति । भवान् जानाति एव यत् त्रेतायुगे कुम्भकर्णः असमाप्त-निद्रः एव उत्थाय युद्धार्थं गतवान्, तत्रैव मरणम् अपि प्राप्तवान् इति । निद्रा समाप्तिं न गता इत्यतः तस्य पुनर्जन्म जातम् अस्ति । कुम्भकर्णः वर्षे षट् मासान् जागर्ति स्म, षट् मासान् च निद्रां करोति स्म । भवतः पुत्रः तु वर्षे अधिककालं निद्राति । रोदनात् निद्रा नष्टा भवति इत्यतः सः न रोदिति'' इति ।

संन्यासिनः वचनं श्रुत्वा श्यामः रुक्मिणी च किञ्चिदिव शान्तौ । महता प्रेम्णा तौ पुत्रस्य नाम निश्चितवन्तौ - कुम्भः इति । तौ वात्सल्येन तस्य पालनपोषणं कृतवन्तौ । कुम्भः प्रातः एव उत्तिष्ठति स्म । प्रातर्विधेः समाप्तेः अनन्तरम् अल्पाहारं सेवित्वा क्षीरं च पीत्वा निद्रां करोति स्म । पुनः उत्थानं मध्याह्ने भोजनसमये एव । मध्याह्नभोजनानन्तरं सुप्तस्य तस्य जागरणं भवति स्म रात्रिभोजनकाले । तदनन्तरं पुनः शयनम् अस्ति एव । एवम् आहारार्थम् एव सः उत्तिष्ठति स्म । आहार-निद्राभ्याम् ऋते अन्यत् किमपि न करोति स्म

महर्षिः

सः । अतः तदीयं शरीरं स्थूलं जातम् ।

पञ्चमे वर्षे सः विद्यालयं प्रति प्रेषितः । स्थौल्यकारणतः सः पादाभ्यां चलितुं न शक्नोति स्म । अतः विद्यालयगमनाय पित्रा शकटव्यवस्था कृता । विद्यालयं प्रति गमन-समये सः शकटे एव शेते स्म । शालायां सः स्वस्य स्थूलशरीरस्य कारणतः सर्वेषां विनोद-विषयः आसीत् । केचन तस्य कर्णादिकं पीडयन्ति स्म । तथापि स तु कक्ष्यायाम् अपि सुखेन निद्राति स्म ।

एवमेव षोडश वर्षाणि अतीतानि । तस्य स्थौल्यं प्रवृद्धं जातम् । एतस्मिन् अपि वयसि सः पठनं लेखनं वा न जानाति स्म । सः कस्मैचिदपि न कुप्यति स्म । यदि कोपं कुर्यात् तर्हि मम निद्रायाः भङ्गः भवेत् इति तस्य भीतिः । अतः सः सर्वेषां प्रियः आसीत् ।

श्यामः रुक्मिणी च कुम्भस्य भविष्यस्य विषये नितरां चिन्ताक्रान्तौ आस्ताम् । तं साधारणं जनं कर्तुं तौ बहुधा प्रयत्नं कृतवन्तौ । किन्तु सर्वं व्यर्थम् । एतदवसरे एव सः संन्यासी पुनरपि तयोः गृहम् आगतः, यश्च पूर्वं कुम्भस्य जन्मरहस्यम् उक्तवान् आसीत् ।

श्यामरुक्मिण्योः प्रार्थनां पुरस्कृत्य सः संन्यासी आदिनं कुम्भस्य व्यवहारान् परीक्षितवान् । ततः सः अवदत् - ''कुम्भः आदिनं निद्राति इति तु सत्यं, किन्तु सः महाबुद्धिमान् अपि । कठिनम् अपि कार्यं निद्रार्थं शीघ्रातिशीघ्रं साधयितुं सामर्थ्यम् अस्ति तस्मिन् । अतः विद्याग्रहणे अपि तस्य महत् सामर्थ्यम् अस्ति एव । गतजन्मनः निद्रायाः अवशेषः इदानीं समाप्तप्रायः । अतः अहम् अत्रैव वसन् एतं विद्यां बोधयिष्यामि'' इति ।

संन्यासिनः उपायः फलप्रदः जातः । संन्यासिना बोधितं कठिनम् अपि विषयं शीघ्रातिशीघ्रम् अवगत्य शयनं करोति स्म सः । अन्ये बालाः यं वर्षं यावत् पठेयुः तं





# श्रमदानम्

रामपुरं कश्चन लघुग्रामः । तत्रत्यं राममन्दिरं नितरां जीर्णम् आसीत् । कदाचित् यदा महावातः आगतः तदा तत् मन्दिरं नष्टप्रायं जातम् । अतः ग्रामीणाः सर्वे निश्चितवन्तः यत् तस्य उद्धारः करणीयः इति ।

ग्रामस्य प्रमुखाः सर्वे सम्भूय एतदर्थं योजनां कृतवन्तः । ते नारायणनामकस्य गृहं गत्वा योजनां विवृत्य उक्तवन्तः - ''जीर्णस्य मन्दिरस्य पुनर्निर्माणाय दशसहस्रस्य रूप्यकाणां व्ययः भवेत्'' इति ।

एतत् श्रुत्वा नारायणः अवदत् - ''कोऽपि महाराजः स्वशासनकाले एतत् मन्दिरं निर्मापितवान् स्यात् । अर्धलक्षाधिक-रूप्यकाणि व्ययीकृतवान् अपि स्यात् सः । तस्य पुनर्निर्माणाय योऽयं व्ययः क्रियते सः न महान् । श्लाघ्यं कार्यं भवताम् । अतः कार्यारम्भः भवतु'' इति ।

''भवतः एतत् वचनम् अस्माकम् उत्साहं द्विगुणितम् अकरोत् । भवान् वाणिज्यदक्षः । भवतः वाणिज्यदक्षतां न केवलम् अस्मद्-ग्रामीणाः, अपि तु समीपस्थसर्वग्रामीणाः अपि प्रशंसन्ति । भवादृशः धनसम्पन्नः जनः अस्मद्ग्रामे अस्ति यत् तत् तु अस्माकं महते सौभाग्याय । भवत्कारणतः अस्माकं ग्रामस्य कीर्तिः प्रवृद्धा अस्ति'' इति अवदत् ग्राम-प्रमुखः कमलानाथः ।

''कमलानाथवर्य ! एवं प्रशंसया मां लज्जितं मा करोतु । मम दक्षता बुद्धिमत्ता सम्पत्तिः इत्यादयः भगवता रामेण एव अनुगृहीताः । सः एव सर्वस्य कर्ता कारयिता च । मत्समीपे यत् अस्ति तत्सर्वं तदीयात् अनुग्रहात् एव प्राप्तम्'' इति देवालयदिशि मुखं कृत्वा भक्त्या नमस्कारमुद्रया उक्तवान् नारायणः ।

तदा ग्रामपुरोहितः कृष्णशर्मा अवदत् - ''भवतः रामभक्तिः अपूर्वा । तां सर्वे प्रशंसन्ति । मन्दिरस्य पुनर्निर्माणव्ययः यः सम्भावितः अस्ति तस्य चतुर्थांशः भवता

कुम्भः मासाभ्यन्तरे पठितवान् । संन्यासी तस्य प्रशंसां कुर्वन् अवदत् - ''भवान् महाबुद्धिमान् एव । अतः किञ्चन गुरुकुलं गत्वा शास्त्राणाम् अध्ययनं करोतु भवान् । तेन महान् लाभः भवति भवतः लोकस्य चापि'' इति ।

''दीर्घकालं यावत् निद्रारहिततया स्थितिः न शक्यते मया । भवान् तु महामहिमशाली । अतः भवता मम स्वप्नम् आगत्य कुतो वा न पाठनीयम् ?'' इति अपृच्छत् कुम्भः ।

''युक्तम् एतत् । तदा तु भवता भोजनम् अपि स्वप्ने एव करणीयम् । किम् एतत् अङ्गीक्रियते ?'' इति अपृच्छत् संन्यासी ।

''भवतु'' इति वदन् स्वस्य सम्मतिं सूचितवान् कुम्भः । संन्यासी तं स्वप्ने एव पाठयितुम् उद्युक्तः जातः । भोजनम् अपि स्वप्ने एव खलु भवति स्म ? अतः कुम्भस्य उदरं पूरितं न भवति स्म । तत्कारणतः सः पठने मनसः एकाग्रतां कर्तुं न शक्तः । चतुर्षु एव दिनेषु सः अवगतवान् यत् स्वप्ने अध्ययनं व्यावहारिकं न इति । निश्शक्तिकारणतः सः निद्राम् अपि न प्राप्नोति स्म । गृहे तु आहारः न प्राप्यते स्म । अतः भोजनादिप्राप्तये सः गृहात् बहिः अगच्छत् । भोजनालये अखादत् । तत्रत्यं भोजनं तस्मै विशेषतः अरोचत । एवं गमनागमनसमये यानि दृश्यानि दृष्टानि तानि अपि तस्य प्रियाणि जातानि ।

सः अचिन्तयत् - 'मां परितः अहो, सुन्दरः प्रपञ्चः अस्ति ! एतम् अपश्यन् अहं शयनं करोमि स्म । नेत्रे निमील्य ये स्वप्नाः दृश्यन्ते ततोऽपि सुन्दराणि सन्ति एतानि दृश्यानि' इति । स्वचिन्तनं संन्यासिनम् अवदत् च ।

तदा संन्यासी अबोधयत् - ''यः मानवरूपेण जन्म प्राप्नोति सः स्वप्नदर्शनाय अल्पं समयं व्ययीकुर्यात्, सत्यं द्रष्टुम् अधिकसमयं व्ययीकुर्यात् । स्वप्नशीलाः जाग्रदवस्थायाम् एव सत्यं द्रष्टुम् अर्हन्ति । अतः मानवः अधिकाधिककालं जागरितः एव तिष्ठेत् । किन्तु परिश्रमहीना जाग्रदवस्था अपि निद्रातुल्या एव । अतः मानवेन श्रमः करणीयः, तद्द्वारा लोकोपकारश्च करणीयः'' इति ।

कुम्भे एतस्य हितबोधस्य परिणामः महान् जातः । गच्छता कालेन शास्त्राणाम् अध्ययनं कृत्वा सः महाज्ञानी संवृत्तः । इदानीं तेन अल्पा निद्रा क्रियते, किन्तु अधिकः आनन्दः प्राप्यते ।





# श्रमदानम्

रामपुरं कश्चन लघुग्रामः । तत्रत्यं राममन्दिरं नितरां जीर्णम् आसीत् । कदाचित् यदा महावातः आगतः तदा तत् मन्दिरं नष्टप्रायं जातम् । अतः ग्रामीणाः सर्वे निश्चितवन्तः यत् तस्य उद्धारः करणीयः इति ।

ग्रामस्य प्रमुखाः सर्वे सम्भूय एतदर्थं योजनां कृतवन्तः । ते नारायणनामकस्य गृहं गत्वा योजनां विवृत्य उक्तवन्तः - ''जीर्णस्य मन्दिरस्य पुनर्निर्माणाय दशसहस्रस्य रूप्यकाणां व्ययः भवेत्'' इति ।

एतत् श्रुत्वा नारायणः अवदत् - ''कोऽपि महाराजः स्वशासनकाले एतत् मन्दिरं निर्मापितवान् स्यात् । अर्धलक्षाधिक-रूप्यकाणि व्ययीकृतवान् अपि स्यात् सः । तस्य पुनर्निर्माणाय योऽयं व्ययः क्रियते सः न महान् । श्लाघ्यं कार्यं भवताम् । अतः कार्यारम्भः भवतु'' इति ।

''भवतः एतत् वचनम् अस्माकम् उत्साहं द्विगुणितम् अकरोत् । भवान् वाणिज्यदक्षः । भवतः वाणिज्यदक्षतां न केवलम् अस्मद्-ग्रामीणाः, अपि तु समीपस्थसर्वग्रामीणाः अपि प्रशंसन्ति । भवादृशः धनसम्पन्नः जनः अस्मद्ग्रामे अस्ति यत् तत् तु अस्माकं महते सौभाग्याय । भवत्कारणतः अस्माकं ग्रामस्य कीर्तिः प्रवृद्धा अस्ति'' इति अवदत् ग्राम-प्रमुखः कमलानाथः ।

''कमलानाथवर्य ! एवं प्रशंसया मां लज्जितं मा करोतु । मम दक्षता बुद्धिमत्ता सम्पत्तिः इत्यादयः भगवता रामेण एव अनुगृहीताः । सः एव सर्वस्य कर्ता कारयिता च । मत्समीपे यत् अस्ति तत्सर्वं तदीयात् अनुग्रहात् एव प्राप्तम्'' इति देवालयदिशि मुखं कृत्वा भक्त्या नमस्कारमुद्रया उक्तवान् नारायणः ।

तदा ग्रामपुरोहितः कृष्णशर्मा अवदत् - ''भवतः रामभक्तिः अपूर्वा । तां सर्वे प्रशंसन्ति । मन्दिरस्य पुनर्निर्माणव्ययः यः सम्भावितः अस्ति तस्य चतुर्थांशः भवता

दातव्यः इति सर्वेषाम् इच्छा'' इति ।

एतत् श्रुत्वा नारायणः आश्चर्येण स्तब्धः सन् अवदत् – ''एतस्य तात्पर्यं यत् भवन्तः मत्तः सार्धद्विसहस्त्रं रूप्यकाणि अपेक्षन्ते इति'' इति ।

''एतावतः दानं न कष्टकरं भवतः । एवं ननु ? एकस्य दिनस्य आयः अपि इतोऽपि अधिकः स्यात् भवतः'' इति अवदत् ग्राम-प्रमुखः ।

''दातव्यं धनं महत् न स्यात् नाम । तथापि धनस्य दाने विप्रतिपत्तिः काचित् अस्ति मम । मित्रेण बन्धुना वा यत् दीयते तस्य प्रत्यर्पणम् अपमानकरं भावयामि अहम् । एवं स्थिते भगवता दत्तस्य कश्चन भागः तस्मै एव प्रत्यर्प्यते चेत् मया भगवतः अपमाननं कृतं भवेत् । एतत् सर्वथा न इच्छामि अहम् । किन्तु भगवते किमपि अदत्त्वा तूष्णीं तिष्ठेयं चेदपि तत् अनुचितं स्यात् । अतः मया श्रमदानं क्रियते । धनदानात् अपि सुमहत् अस्ति श्रमदानम् । यावत् मन्दिरनिर्माणकार्यं न समाप्यते तावत् अहं मम पुत्रः च प्रतिदिनं मन्दिरम् आगत्य घण्टां यावत् श्रमसेवां करिष्यावः'' इति अवदत् नारायणः ।

एतत् श्रुत्वा अन्ये सर्वे हसितवन्तः । तस्मात् नारायणस्य मुखं कान्तिहीनं जातम् । तदा ग्रामप्रमुखः अवदत् – ''मन्दिरनिर्माणाय दशसहस्त्रं रूप्यकाणि आवश्यकानि । ये ये भगवतः दर्शनार्थं मन्दिरम् आगच्छन्ति तेभ्यः सर्वेभ्यः अपि वयं तत्तस्य स्तरस्य अनुगुणं धनं सङ्गृह्णीमः । भवान् प्रातः सायं च मन्दिरम् आगच्छति खलु ? तदा भवतः अपि धनं सङ्ग्रहीष्यामः वयम्'' इति ।

'केनचित् रूपेण वा एते मत्तः धनं प्राप्नुयुः एव' इति विचिन्त्य नारायणः निर्गन्तुम् उद्युक्तस्य ग्रामप्रमुखस्य हस्तं गृहीत्वा – ''क्षणं प्रतीक्षताम्'' इति उक्त्वा अन्तः गत्वा धनम् आनीय दत्तवान् ।

ग्रामप्रमुखः अन्ये सर्वे च नारायणम् अभिनन्दनवचनानि उक्तवन्तः । प्रस्थानसमये पुरोहितः नारायणम् अवदत् – ''धनदानं तु अवरम् । श्रेष्ठं श्रमदानं प्रतिज्ञातम् अस्ति भवता । तत् न विस्मर्तव्यम्'' इति ।

एतत् श्रुत्वा तत्रत्याः सर्वे जनाः उच्चैः हसितवन्तः ।






## चञ्चायते कूष्माण्डम्



यदि भवन्तः तमिलुनाडुराज्यं गच्छेयुः तर्हि तत्र सर्वेषां नूतनगृहाणां पुरतः एकं दानवमुखं पश्येयुः । तत् भयजनकं भवति प्रायः । किन्तु तदस्ति कुष्माण्डस्य उपरि चित्रितम् । एतद्राज्यीयाः जनाः महतः श्वेतकुष्माण्डस्य उपरि तादृशं मुखं चित्रयित्वा नूतनगृहस्य पुरतः उत्तोलयन्ति । दुष्टदृष्टेः निवारणार्थम् एवं क्रियते तैः । नूतनस्य वाहनस्य प्रारम्भपूजावसरे अपि श्वेतकुष्माण्डस्य भञ्जनं क्रियते । नूतन-कार्यारम्भावसरे अपि एवं क्रियते । अमावास्यादिषु प्रातिमासिकेषु अवसरेषु अपि एवं क्रियते क्वचित् ।

## आराध्यः, उत दूष्यः ?

महाभारतीयायां कथायां प्रस्तुतं कौरवाणां नायकं दुर्योधनं कीदृशं वदन्ति भवन्तः ? पाण्डवेभ्यः सः सदा असूयति स्म इति खलु ? सः अतिमहत्त्वाकांक्षी आसीत्, महादुष्टः च आसीत् इति तु वदेयुः एव । किन्तु उत्तरकाश्याः जमुनाखातस्य पश्चिम-भागे वसन्तः केचन जनाः भवताम् एतत् मतं सर्वथा न अङ्गीकुर्वन्ति । यतः दुर्योधनः अस्ति तेषाम् आराध्य-देवः । प्रतिदिनं ते तं भक्त्या पूजयन्ति !!



## गोवाराज्यीया जानपदकथा

दमनन्दीवद्वीपसहितं गोवाराज्यं भारतस्य पश्चिमतीरे अस्ति । गोवा एकं नैसर्गिकं नौकास्थानम् । अतः पोर्चुगीस्जनाः स्वस्य मरीचादिविक्रयणवृत्तेः संरक्षणाय एतं द्वीपम् अवलम्बितवन्तः । १९६१ तमवर्षपर्यन्तम् एतत् राज्यं पोर्चुगीस्जनानाम् अधीनम् आसीत् । ततः तस्य केन्द्रशासितता प्राप्ता । १९८७ तमे वर्षे मे-मासस्य ३० तमे दिनाङ्के राज्यत्वेन मान्यता प्राप्ता ।

पश्चिमघट्टप्रदेशे सह्याद्रिश्रेण्याः मूले एतत् राज्यम् अस्ति । एतस्य उत्तरे भागे महाराष्ट्रराज्यम् अस्ति । दक्षिणे पूर्वभागे च कर्णाटकराज्यम् अस्ति । पश्चिमभागे अरेबियन्सागरः अस्ति ।

गोवाराज्यस्य जनासङ्ख्या १३,४३, ९९८ मिता । विस्तारश्च ३,७०२ चतुरस्रकिलोमीटर्मिता । गोवाराज्यस्य शासनव्यवहारभाषा अस्ति कोङ्कणी । पोर्चुगीस्भाषया, मराठीभाषया, आंग्ल-भाषया चापि अत्र व्यवहारः प्रचलति ।

'गोवानाम्नः मूलं किम् ?' इत्यत्र बहवः अभिप्रायाः श्रूयन्ते । गोमन्ताचलः, गोपक-पट्टनम्, गोवपुरी इत्यादीन् ह्रस्वीकृत्य पोर्चुगीस्जनाः गोवाशब्देन व्यवहारम् आरब्ध-वन्तः इति अस्ति कश्चन वादः । 'गोमन्ता-चलः' इत्यस्य अर्थः भवति गोसम्बन्धी पर्वतः इति । गोमन्ताचलशब्दः 'गोमती'शब्दात् निष्पन्नः स्यात् । गोमत्याः अद्यतनं नाम माण्डोवी इति । एषा गोवाराज्यस्य प्रमुखा नदी ।

# गानसमर्थः सिंहः

प्राचीने काले कश्चन वणिक् आसीत् । सः मरीचादीनाम् उपस्करवस्तूनां वाणिज्यं करोति स्म । कदाचित् तस्य ज्येष्ठः पुत्रः रुद्रेशः वाणिज्याय गृहात् निर्गतः । तस्य नौका विक्रेतव्यैः वस्तुभिः पूर्णा आसीत् ।

अचिरात् एव सः एकं सुन्दरं द्वीपं प्राप्तवान् । द्वीपस्य तीरे एव लिखितम् आसीत् - "**अस्माकं राजकुमारी माया केभ्यश्चित् मासेभ्यः न दृश्यते । सप्ताहाभ्यन्तरे यः ताम् अन्वेष्टुं शक्नोति सः ताम् एव**



परिणेतुम् अर्हति । यः सप्ताहावधौ ताम् अन्वेष्टुम् असमर्थः भवति सः कारागारे स्थाप्यते, तदीया सम्पत्तिः स्वायत्तीकरिष्यते च'' इति ।

रुद्रेशः स्वस्य भाग्यं परीक्षितुम् इष्टवान् । 'राजकुमारी एतस्मिन् द्वीपे एव कुत्रचित् स्यात् । एषः कश्चन लघुः द्वीपः । अतः एतस्मिन् अन्वेषणं न कष्टकरम्' इति सः अचिन्तयत् ।

सः राजप्रासादं गत्वा राजानं दृष्ट्वा अवदत् - ''महाराज ! मम नाम रुद्रेशः इति । अहं वणिजः पुत्रः । अद्य एतं द्वीपम् आगतः अहं तीरस्थं फलकं दृष्टवान् । राजकुमारीम् अन्वेष्टुं शक्ष्यामि एव इत्यस्ति मम दृढः विश्वासः । यदि अहम् असफलः भवेयं तर्हि मम सम्पत्तिं भवान् स्वाधीनीकर्तुं शक्नुयात् एव'' इति ।

द्वीपे सर्वत्र विनानिर्बन्धं सञ्चाराय तस्मै अनुज्ञां दत्तवान् राजा । रुद्रेशः भिक्षुकवेषं धृत्वा द्वीपे सर्वत्र अन्वेषणं कृतवान् । किन्तु सः राजकुमार्याः विषये वार्तालेशम् अपि प्राप्तुं न शक्तवान् । सप्ताहानन्तरं राजा तस्य सम्पत्तिं स्वायत्तीकृत्य तं कारागारे स्थापितवान् ।

केचन मासाः अतीताः । पुत्रस्य अनागमनं दृष्ट्वा वणिक् नितरां चिन्ताक्रान्तः । सः स्वस्य द्वितीयं पुत्रं नागेशम् उक्तवान् - ''रुद्रेशः कमपि अपायं सम्मुखीकृतवान् स्यात् । भवान् तस्य अन्वेषणं कृत्वा आगच्छतु'' इति ।

नागेशः एतत् अङ्गीकृतवान् । सः अपि नौकायां वस्तूनि पूरयित्वा ताम् एव दिशम् अनुसृतवान्, यां च अग्रजः रुद्रेशः अनुसृतवान् आसीत् ।

यः द्वीपः रुद्रेशेन गतः आसीत् सः एव द्वीपः नागेशेन अपि प्राप्तः । तत्रत्यं सूचना-



फलकम् अपि तेन पठितम् । सः अपि स्वस्य भागस्य परीक्षां कर्तुम् इष्टवान् । अतः सः राजानं दृष्ट्वा राजकुमार्याः मायायाः अन्वेषणाय अनुज्ञां प्रार्थितवान् । राजा नियमं स्मारयित्वा अनुज्ञां दत्तवान् । नागेशः दैवज्ञवेषेण गृहात् गृहं गच्छन् सर्वत्र अन्वेषणं कृतवान् । सप्ताहः अतीतः । तथापि तेन राजकुमारी न प्राप्ता ।

## करकौशलवस्तूनि

गोवासंस्कृतिः भारतीयानां पोर्चुगीसीयानां च अंशानां मेलनेन विकसिता । अतः तत्रत्येषु करकौशलवस्तुषु एषा एव संस्कृतिः प्रतिबिम्बिता दृश्यते । वेणुनिर्मितवस्तूनि, मृद्निर्मितवस्तूनि, काष्ठशिल्पं, शुक्तिनिर्मितवस्तूनि, ऊताः कटाः इत्यादयः अत्र प्राधान्येन दृश्यन्ते । एतत् अतिरिच्य कागदनिर्मितानि वस्तूनि, बाटिक्कलायुक्त चित्राणि, विविधाः पाञ्चालिकाः इत्यादयः अपि अत्र प्रसिद्धाः ।

अतः राजा तमपि कारागारे स्थापयित्वा तदीयां सम्पत्तिं वशीकृतवान् ।

पुनरपि मासाः अतीताः । प्रथमपुत्रस्य अन्वेषणाय गतः द्वितीयः पुत्रोऽपि न आगतः । अतः वणिक् निश्चितवान् यत् पुत्रयोः अन्वेषणाय अहम् एव गच्छामि इति । तदा तस्य तृतीयः पुत्रः अवदत् - "तात ! भवान् वृद्धः जातः अस्ति । दीर्घप्रयाणक्लेशं सोढुं न अर्हति भवतः शरीरम् । अतः अहम् एव गत्वा अग्रजयोः अन्वेषणं कृत्वा आगमिष्यामि । कृपया अनुज्ञां ददातु" इति । पिता एतं प्रस्तावम् अङ्गीकृतवान् ।

सः अपि नौकया प्रयाणं कुर्वन् तमेव द्वीपं प्राप्तवान् । तेनापि तत्रत्यं सूचनाफलकं दृष्टम् । सः अचिन्तयत् - 'मम अग्रजौ अपि एतत् फलकं दृष्ट्वा राजकुमारीम् अन्वेष्टुम् उद्युक्तौ सन्तौ कारागारे स्याताम् इदानीम्'' इति ।

सः नगरं प्रविश्य अग्रजयोः विषये विचारणाम् आरब्धवान् । किन्तु कोऽपि तयोः विषये किमपि न जानाति स्म । अन्ते एका उद्यानपालिका वृद्धा तेन दृष्टा । सा उक्तवती यत् उभौ तरुणौ राजकुमारीम् अन्वेष्टुं गतौ असाफल्यं प्राप्य कारागारं प्राप्तवन्तौ, तयोः सम्पत्तिः राज्ञा वशीकृता अस्ति इति ।

"तौ मम अग्रजौ एव । तयोः अन्वेषणार्थम् अहम् आगतः । इदानीम् अहं तौ कारागारात् मोचयितुम् इच्छामि । राजकुमारीम् अन्विष्य तां परिणेतुम् अपि इच्छामि । किं भवती मम साहाय्यं कर्तुं शक्नुयात् ? राजकुमारी कुत्र स्यात् ?" इति अपृच्छत् मङ्गेशः ।

तदा सा वृद्धा उक्तवती - "राजकुमारी कुत्र स्यात् इति यदि अहं जानीयां तर्हि मत्पुत्रद्वारा तस्याः अन्वेषणं कारयित्वा तां मत्स्नुषाम् अकरिष्यम् । तस्याः अन्वेषणार्थम् एकः एव मार्गः - राजप्रासादः कथमपि प्रवेष्टव्यः इति । किन्तु राजप्रासादं कश्चन पक्षी अपि प्रवेष्टुं न अर्हति" इति ।

"अम्ब ! भवत्या युक्तम् उक्तम् । एतदर्थं कमपि मार्गं सूचयतु कृपया" इति प्रार्थितवान् मङ्गेशः ।

वृद्धा क्षणकालं चिन्तनं कृतवती । ततः तया कश्चन उपायः प्राप्तः । सा मङ्गेशं तम् उपायम् उक्तवती । तं श्रुतवतः मङ्गेशस्य मुखं विकसितं जातम् । "अम्ब ! उपकृतः अस्मि" इति कृतज्ञतापूर्वकम् उक्तवान् सः ।



वृद्धा उक्तवती - ''स्वर्णकारसमीपं गत्वा एकं स्वर्णमयं महासिंहं कारयतु, यस्य च अन्तः विशालः स्थलावकाशः स्यात्'' इति ।

तादृशः सिंहः सिद्धः । तं स्वीकृत्य वृद्धा राजास्थानं गतवती । राज्ञे तं प्रदर्शयन्ती - ''महाप्रभो ! एषः सुवर्णसिंहः गातुं समर्थः । तत् प्रदर्शयितुम् अहम् आगता'' इति उक्त्वा सिंहम् उद्दिश्य सा आज्ञापयत् - ''अये अपूर्वसिंह ! कृपया गीतं गायतु'' इति ।

अनन्तरक्षणे एव सिंहस्य मुखात् श्रवणरमणीयं गीतं निर्गतम् । तत् श्रुत्वा नितरां सन्तुष्टः राजा अवदत् - ''आर्ये ! अपूर्वः सिंहः अयम् । अहम् एतं क्रेतुम् इच्छामि । किं मूल्यम् एतस्य ?'' इति ।

''महाराज ! क्षन्तव्या अहम् । एषा विक्रेया न । मम गृहे वसतः कस्यचित् प्रयाणिकस्य एषः । सः श्वः अस्माकं नगरं त्यक्ष्यति । भवते दर्शयितुम् एव अहम् आगता'' इति अवदत् वृद्धा ।

''तर्हि एषः एकं दिनं मम प्रासादे भवतु । अहं राज्ञ्यै, अन्येभ्यः परिवारसदस्येभ्यः च एतं दर्शयितुम् इच्छामि । एतदर्थं यथायोग्यं धनं दास्यामि'' इति अवदत् राजा ।

''अस्तु, श्वः आगत्य एतं नेष्यामि'' इति उक्त्वा वृद्धा ततः निर्गतवती ।

राजा तं सिंहं राज्ञीसमीपं नीतवान् । तस्य सिंहस्य गानसामर्थ्यं दृष्ट्वा राज्ञी नितरां सन्तुष्टा । सा राजानम् अवदत् - ''एतं वयं मायायै अपि दर्शयाम । एतं दृष्ट्वा सा नितरां सन्तुष्टा भवेत्'' इति । राजा सम्मतिं दर्शितवान् ।

ततः सः तं सिंहं स्वप्रकोष्ठं प्रति नीतवान् । तत्र तेन रत्नकम्बलम् उन्नीय एकं शिलाफलकम्



अपसारितम् । तत्र सोपानपङ्क्तिः आसीत् । तेन मार्गेण सः भूतलस्थम् अन्तर्गृहं प्राप्तवान् । ततः सः एकैकं प्रकोष्ठम् उद्घाटयन् बहून् प्रकोष्ठान् अतिक्रम्य अन्ते एकं प्रकोष्ठं प्राप्तवान् । तत्र समानाकारिकाः, समानवेषधारिण्यः च दश तरुण्यः आसन् । राजा अग्रे गत्वा तासु काञ्चित् प्रीत्या आलिङ्गितवान् । सा एव आसीत् तस्य प्रीतिपात्रपुत्री माया !

''तात ! आदिनम् अत्रैव स्थितिः महतीं नीरसतां जनयति । एताभिः सह कियत्कालं क्रीडेयम् ? मया इतोऽपि कति दिनानि अत्र स्थातव्यम् ?'' इति अपृच्छत् माया ।

''न अधिककालं वत्से ! अत्र किमर्थं स्थितिः इत्यस्य कारणं भवती जानाति एव । अस्माकं कोषागारं रिक्तम् अस्ति । अन्यराज्येभ्यः आगन्तॄणां वणिजां सम्पत्त्या तत् पूर्यते । इतोऽपि कांश्चन मासान् अत्र वसतु

वत्से !'' इति प्रीत्या अवदत् राजा ।

ततः सः तस्यै गानसमर्थं सिंहम् अदर्शयत् । माया, तस्याः सख्यः च एतं सिंहं दृष्ट्वा नितरां सन्तुष्टाः । ''अद्य रात्रौ एषः सिंहः अत्रैव भवतु तात !'' इति प्रार्थितवती माया । राजा अङ्गीकृतवान् ।

माया तत्सख्यः च सिंहस्य मुखात् बहूनि गीतानि श्रुतवत्यः । अन्ते माया तेन सिंहेन सह स्वस्य प्रकोष्ठं गत्वा अवदत् – ''हे सिंह ! किं भवान् शोकपूर्णं प्रेमगीतं गातुं शक्नुयात् ?'' इति ।

अनन्तरक्षणे एव सिंहः मधुरेण स्वरेण एकं विरहगीतम् अगायत् । एतस्मात् सन्तुष्टा माया अवदत् – ''अये, कोकिलकण्ठ ! कुत्र अस्ति भवान् ? अहं भवन्तं परिणेतुम् इच्छामि'' इति ।

तदा सिंहः मानवस्वरेण अवदत् – ''यदि भवती मम पादे स्थितां शृङ्खलाम् आकर्षेत् तर्हि अहं प्रत्यक्षः भवेयं मानवरूपेण'' इति ।

माया सिंहस्य पाददेशे स्थितां शृङ्खलाम् आकर्षत् । तदा सिंहस्य उदरभागे किञ्चन द्वारम् उद्घाटितम् । ततः मङ्गेशः बहिः आगतः । सः मायाम् अवदत् – ''भवतीं परिणेतुम् एव अहम् अत्र आगतः । अहं भवत्यां नितराम् अनुरक्तः अस्मि'' इति ।

माया रोमाञ्चिता जाता । ततः तौ अग्रे किं करणीयम् इति चिन्तयन्तौ तां रात्रिं यापितवन्तौ । मङ्गेशः ज्ञातवान् यत् मुखे स्थितस्य तिलकाकारस्य कालकस्य द्वारा एव माया अभिज्ञातुं शक्या इति । अन्यासां मुखे तादृशं कालकं कृत्रिमतया कल्पितम् आसीत् । सूक्ष्मदर्शनात् एतत् अभिज्ञातुं शक्यम् आसीत् ।

अनन्तरदिने प्रातः मङ्गेशः सिंहं प्रविष्टवान् । सिंहः ततः प्रतिनीतः । राजा तं तस्यै वृद्धायै प्रत्यर्पितवान् ।

अनन्तरं मङ्गेशः राजानं दृष्ट्वा आत्मविश्वासपूर्वकम् अवदत् – ''महाराज ! अहं वणिजः पुत्रः । दूरदेशात् आगतः । राजकुमारीम् अन्वेष्टुम् इच्छामि । एतदर्थं कृपया अनुज्ञा दातव्या'' इति । राजा नियमं श्रावयित्वा अनुज्ञां दत्तवान् ।

मङ्गेशः द्वीपे सञ्चरन् षड् दिनानि यापितवान् । सप्तमे दिने सः राजानं दृष्ट्वा अवदत् – ''प्रासादे अपि अन्वेषणाय अनुमतिः दातव्या'' इति । एतत् श्रुतवतः राज्ञः मुखं विच्छायं

## नृत्यप्रकारः



गोवाराज्यीयं जानपदनृत्यं स्थानीयसंस्कृतेः परम्परायाः च सान्द्रप्रभावेण युक्तम् अस्ति । 'फुङ्गी' इत्येतत् अत्रत्यं जनप्रियं जानपदनृत्यम् । एतत् नृत्यं महिलाभिः एव प्रदर्श्यते । सर्वेषु सामाजिकमेलनेषु प्रायः एतस्य प्रदर्शनं भवति एव ।

'धोलो' इत्येषः अपरः नृत्य-प्रकारः, यश्चापि महिलाभिः एव अभि-नीयते । घोडे मोइनि, गोफ, कुम्बी, रोमात् इत्यादीनि अत्रत्यानि अन्यानि कानिचन जानपदनृत्यानि, यानि च तालप्रधानानि, पद-निक्षेपानुकूलानि च ।

जातम् । तथापि निराकृतिं दर्शयितुम् अशक्नुवन् सः अनन्यगतिकतया अनुज्ञां दत्तवान् ।

मञ्जेशः समग्रे प्रासादे अन्वेषणं कृत्वा अन्ते राज्ञः शयनप्रकोष्ठं गतवान् । तत्रापि सर्वत्र अन्विष्य अन्ते रत्नकम्बलम् उन्नीतवान् । ततः शिलाफलकम् उन्नीतं तेन । तत्र सोपानपङ्क्तिः दृष्टिगोचरतां गता ।

तेनैव मार्गेण अग्रे गच्छन् प्रकोष्ठान् अतिक्रम्य सः अन्तिमप्रकोष्ठं गतवान्, यत्र च दश तरुण्यः आसन् । राजा विच्छायवदनः सन् तम् अनुसृतवान् आसीत् । ताः दर्शयन् मञ्जेशः अवदत् - ''महाराज ! एतासु अन्यतमा एव भवतः पुत्री'' इति ।

''अन्यतमा सा का इति अभिज्ञातव्यं भवता'' इति असूचयत् राजा ।

मञ्जेशः तासां समीपं गत्वा एकैकाम् अपि सूक्ष्मदृष्ट्या परिशीलितवान् । तस्मात् सः तासां मुखे स्थितस्य कालकस्य अभिज्ञानं प्राप्तुं शक्तवान् । यस्याः मुखे जन्मजातं कालकम् आसीत् तस्याः पुरतः स्थित्वा विनयेन अवनम्य राजानम् उद्दिश्य सः अवदत् - ''महाराज ! एषा एव भवतः पुत्री'' इति ।



''भवान् महाचतुरः बुद्धिमान् च । भवान् एव मम जामाता भवितुम् अर्हः'' इति सन्तोषं प्रकटयन् अवदत् राजा ।

मञ्जेशः राजकुमार्याः परिणयम् अङ्गीकुर्वन् प्रार्थितवान् - ''एतदवसरे काचित् प्रार्थना अस्ति मम । एताम् अन्वेष्टुम् आगताः कारागारे च भवता स्थापिताः सर्वे विमोक्तव्याः इति अभ्यर्थये'' इति ।

राजा एतत् अङ्गीकृतवान् । रुद्रेशः, नागेशः, अन्ये च कारागारात् विमुक्ताः । ततः मञ्जेश-राजकुमार्योः विवाहः प्रवृत्तः । 'राजकुमारी कथम् अन्विष्टा' इत्येतत् मञ्जेशमुखात् शृण्वन्तौ रुद्रेशनागेशौ भ्रातृजायया मायया, अनुजेन मञ्जेशेन च सह स्वगृहं प्रतिनिवृत्तौ ।

## पाकक्रमः

गोवाराज्यीयः पाकक्रमः मरीचाद्युपस्करबहुलः । दक्षिणभारतीयस्य राजवंशीयस्य च पाकक्रमयोः मेलनात् विकसितः एषः । साम्प्रदायिकगोवीयपाके पोर्चुगीसीयः सद्योविकसितपुष्पयोजनक्रमः सम्मिलितः अस्ति । गोवा समुद्रतीरस्य राज्यम् इत्यतः मत्स्याः, अन्ये समुद्रप्राप्याः आहाराः च अत्र जनप्रियाः । ते उपस्करसहिततया एव उपयुज्यन्ते । 'फेन्नि'नामकं स्थानीयं मद्यम् अत्र बाहुल्येन प्राप्यते । एतत् च भल्लातक-नारिकेलादिभिः सज्जीक्रियते ।

# वार्ताविशेषः

## दक्षिणध्रुवप्रदेशे भारतीयमहिला

केरलीया ४६ वर्षीया राचेल्थामस्वर्या आकाशचारिणी सती दक्षिणध्रुवप्रदेशे पदं स्थापयन्ती, एवं पदं स्थापितवत्सु प्रथमा भारतीयमहिला इति ख्यातिं प्राप्तवती । एषः विक्रमः तया गते एप्रिल्मासे साधितः । यदा वातावरणं ऊनपञ्चाशत्डिग्री-सेल्सियस् (–50°) आसीत् तदा सा १००० पादोन्नतप्रदेशात् उत्कूर्दनं कृतवती । एतस्यां यात्रायां सा शुष्कमीनैः हरिणमांसेन च आहारव्यवस्थां सम्पादयति स्म । तस्याः पुत्री अन्ना पूर्वं कदाचित् 'भारत-सुन्दरी' पदम् अलङ्कृतवती आसीत् । राचेल्वर्या गतेभ्यः २५ वर्षेभ्यः आकाशचरणं कुर्वती अस्ति ।




## महातालः देवालयाय

पुर्याः जगन्नाथदेवालये जुलैमासे रथयात्रा भवति प्रतिवर्षम् । तस्य मुख्यद्वारस्य तालः अतिविशिष्टः । एतस्य औन्नत्यं द्विपादमितम्, एकपादमितं वैशाल्यं, ५० किलोभारः च । एतस्य निर्माणार्थं मासत्रयात्मकः कालः अपेक्षितः अभवत् । निर्माणव्ययः आसीत् ३०,००० । एतस्य तिस्रः कुञ्चिकाः सन्ति । एकैका अपि ३६सें.मी.दीर्घा । एषः तालः यया कृतः तया कृतेषु तालेषु अति-महान् एषः एव न । १९६१ तमे वर्षे तया ८० किलोभारयुतः तालः निर्मितः आसीत् देहल्यां प्रवृत्तस्य विश्ववाणिज्यप्रदर्शनस्य कृते ।





# विघ्नेश्वरः

गणाधिपत्यस्य पट्टाभिषेकस्य निमित्तं विघ्नेश्वराय विविधानि वर्णमयानि वस्त्राणि दत्तवती पार्वती । किन्तु विघ्नेश्वरः तानि अनिच्छन् श्वेतं वस्त्रम् एव धृतवान् ।

एतत् दृष्ट्वा पार्वती पृष्टवती – ''वत्स ! यस्मिन् समये रमणीयानि वस्त्राणि धरणीयानि तस्मिन् काले किम् एतत् श्वेतवस्त्रं धृतं भवता ?'' इति ।

''किम् एतत् रमणीयं वस्त्रं न ? श्वेतं वस्त्रम् उत्तमस्वभावं विवेकं च द्योतयति'' इति उक्तवान् विघ्नेश्वरः ।

एतदनन्तरं पट्टाभिषेककार्यक्रमः प्रवृत्तः । विघ्नेश्वरः गणनाथः संवृत्तः । जयलक्ष्मी-धारिणी सिद्धिः, विद्यावतीनामिका बुद्धिः च विघ्नेश्वरं वृतवत्यौ, तस्य उभयपार्श्वयोः स्थित-वत्यौ च । एतत्कारणतः विघ्नेश्वरः सिद्धिबुद्धि-विनायकः इति नाम प्राप्तवान् । तस्मिन् एव समये अष्टभ्यः दिशाभ्यः आगताः अष्ट सिद्धयः कन्यकारूपं धृत्वा, वकुलमाला-हस्ताः सत्यः गणेशं वृतवत्यः । एतत्कारणतः विघ्नेश्वरः सिद्धिविनायकः इति ख्यातिं गतः । तदीयः विवाहः महता वैभवेन सम्पन्नः ।

विष्णुः विघ्नेश्वरम् उक्तवान् – ''इतः परं जनाः वदिष्यन्ति यत् सहस्राधिकविघ्नेषु सत्सु अपि विघ्नेश्वरस्य विवाहः स्थगितः न जातः इति । हे कल्याणगणेश ! भवतः अनुग्रहात् यस्य विवाहः भविष्यति तस्य जन्म धन्यं भविष्यति'' इति ।

''आम् । एवम् एव भविष्यति । भवान् अपि कौसल्यागर्भतः जन्म प्राप्य रामचन्द्ररूपं प्राप्य सीतां परिणीय धन्यतां प्राप्य रावण-नामकं राक्षसं संहरिष्यति'' इति अवदत्



विघ्नेश्वरः ।

विष्णुः पुनः उक्तवान् - ''गजानन ! भवतः मुखस्य दर्शनात् गजविषये कोऽपि ममत्वभावः मयि जागर्ति'' इति ।

''एवम् ! भवान् अपि मकरेण गृहीतं गजेन्द्रं रक्षन् करिवरदः इति ख्यातिं प्राप्स्यति'' इति अवदत् विघ्नेश्वरः ।

एतदनन्तरम् अष्ट सिद्धयः विघ्नेश्वरस्य पार्श्वयोः स्थित्वा चामरेण वीजनं कृतवत्यः । सिद्धिबुद्धिसमेतः, सिद्धवनिताभिः समावृतः विघ्नेश्वरः ताराभिः आवृतः चन्द्रमाः इव सुशोभते स्म ।

एतदवसरे लक्ष्मीः मुखं परिवृत्य ततः निर्गन्तुम् उद्युक्ता । तदा तस्याः गमनं निवार्य विष्णुः उक्तवान् - ''सिद्धिविनायक ! एषः अपवादः श्रूयते यत् लक्ष्मीः एकत्र न तिष्ठति इति । भवान् तां स्वस्य अङ्के स्थापयतु, येन सा स्थिरतां प्राप्नुयात्'' इति ।

''अस्तु तावत् । मातरं लक्ष्मीदेवीम् अङ्के वोढुं यः अवकाशः प्राप्तः तस्मात् अहं नितरां सन्तुष्टः अस्मि । एतस्मात् अहम् आत्मानं धन्यं मन्ये'' इति उक्त्वा विघ्नेश्वरः लक्ष्मीं स्वशुण्डया उन्नीय वामाङ्के उपवेशितवान् ।

एतत् दृष्ट्वा विष्णुः उक्तवान् - ''इदानीं भवान् लक्ष्मीगणपतिः इति अभिधानम् अर्हति । यः भवतः अनुग्रहं प्राप्नोति तस्य गृहे लक्ष्मीः स्थिरतया स्थास्यति । यथा माता पुत्रं पालयति तथा भवान् भक्तान् पालयति'' इति ।

एतदवसरे नारदः - ''अहो विघ्नेश्वरस्य कियन्ति नामानि ! सिद्धिविनायकः, लक्ष्मीगणपतिः, शुक्लाम्बरधरः, ... इत्यादीनि असङ्ख्यानि नामानि सन्ति तस्य'' इति वदन् स्वस्य महतीनामिकां वीणां वादयन् विघ्नेश्वरस्य अनन्तनामानि स्मरन् 'जय जय जय गणनायक जय हे' इति गायन् लोकसञ्चाराय निर्गतवान् ।

एकदा विघ्नेश्वरः मूषकम् आरुह्य यात्रां कुर्वन् विन्ध्यपर्वतस्य अपरपार्श्वे स्थितम् उन्नतं कृष्णपर्वतं प्राप्तवान् । तत्र आधिक्येन कदलीवनानि दृश्यन्ते स्म । तेषां मध्ये तत्र तत्र गृहाणि निर्माय वसन्तः शबराः ढक्कानकादीन् वादयन्तः नृत्यन्तः दृश्यन्ते स्म ।

विघ्नेश्वरः बालकवेषं धृत्वा तेषां समीपं गतवान् । तं दृष्ट्वा शबराः - ''देवः अस्मदर्थम् एव एतं सुन्दरं बालकम् अत्र प्रेषितवान् अस्ति'' इति वदन्तः तम् उन्नीय नीत्वा उत्सवाचरणस्थले अवतारितवन्तः ।

तत्र रक्तधारया सिक्ता एका महाशिला आसीत् । तस्याः पार्श्वे कश्चन मूकबालकः आसीत् । सः उच्चैः रोदिति स्म । सः बालकः हरिद्राचूर्णेन लेपितः आसीत् । तस्य कटौ कृष्णवर्णीयं वस्त्रं दृश्यते स्म । तस्य कण्ठे रक्तमन्दारमाला शोभते स्म ।

बालकरूपधारी विघ्नेश्वरः तं दृष्ट्वा शबर-नायकम् अवदत् - ''अहं भवतां देवेन सह वार्तालापं कर्तुम् इच्छामि । मां तत्समीपं नयन्तु'' इति ।

एतत् श्रुत्वा उच्चैः हसित्वा शबरनायकः अवदत् - ''भोः, विलक्षणः बालकः भवान् । किं भवान् अस्माकम् आराध्यदेवेन सह वार्तालापं कर्तुम् इच्छति ? अस्माकम् आराध्यदेवः अन्धकारः इव कृष्णवर्णीयः भयङ्करः च । तं द्रष्टुं प्रायः कस्यापि धैर्यं नास्ति । यः तं पश्यति सः भीत्या रक्तं वमन् मरणं प्राप्नोति'' इति ।

एतत् श्रुत्वा विघ्नेश्वरः अहसत् । सः वध्यशिलासमीपं गत्वा अवदत् - ''आत्मनि स्थितस्य भयस्य कारणतः एव भवन्तः आराध्यदेवं घोरं भावयन्ति । भयम् एव भवन्तः भक्त्या पूजयन्तः सन्ति । भवत्सु कोऽपि तं देवं न दृष्टवान् एव । भवतां देवः एतादृशम् उत्सवं बलिं च कदापि न इष्टवान् । भवतां देवः नितरां सुन्दरः अस्ति'' इति ।

एतावत् उक्त्वा विघ्नेश्वरः स्वस्य आयुधेन तां वध्यशिलां प्रहृतवान् । ततः सा शिला सुन्दरमूर्तिरूपेण परिवृत्ता । उपवेशनस्थितौ स्थिता सा मूर्तिः अभयमुद्रां वहति स्म । तस्याः मुखं सुन्दरं मन्दहासयुक्तं च आसीत् ।



एतदनन्तरं विघ्नेश्वरः मूकस्य बालकस्य शिरसि हस्तं स्थापितवान् । अनन्तरक्षणे एव सः बालः स्पष्टस्वरेण अवदत् - ''भगवन् ! अहं भवन्तं शरणं गतः अस्मि'' इति । ततः तेन गणपतिस्तोत्रस्य उच्चारणम् आरब्धम् ।

कृष्णशिला मूर्तिरूपेण परिवृत्ता यत्, मूकः बालकः वक्तुं समर्थः जातः यत् तत् दृष्ट्वा सर्वे शबराः आश्चर्यचकिताः भीताः च । ते भक्त्या विघ्नेश्वरं नमस्कृतवन्तः ।

तान् तस्मात् निवारयन् विघ्नेश्वरः अवदत् - ''भवन्तः मां मा प्रणमन्तु । भयं परित्यज्य आराध्यदेवं प्रणमन्तु । यं भवन्तः पूजयन्ति सः भवतां पिता इव, भ्राता इव, मित्रम् इव .... । बलिसमर्पणं दुष्टं कार्यम् । अतः तत् परित्यजन्तु । यः पूर्वं मूकः आसीत्, यश्च इदानीं वदन् अस्ति सः भवतां गुरुः,



आराध्यदेवतायाः पूजकः च भविष्यति । अहं भवताम् आराध्यदेवस्य समीपं गच्छन् अस्मि । सः आराध्यदेवः अचिरात् एव भवद्भ्यः दर्शनं दास्यति'' इति । ततः सः पर्वतस्य आरोहणम् आरब्धवान् ।

शबराः किञ्चिद्दूरं तम् अनुसृत्य गतवन्तः । अग्रे विघ्नेश्वरः एकः एव गतवान् ।

विघ्नेश्वरः बालकरूपेण एव पर्वतशिखरं प्राप्तवान् । तत्र भैरवस्वामी शिरः अवनमय्य खेदेन उपविष्टवान् आसीत् । सः कृष्णवर्णीयः आसीत् । विघ्नेश्वरः तं दृष्ट्वा धावन् गत्वा प्रीत्या तस्य आलिङ्गनं कृतवान् । तदनन्तरक्षणे एव भैरवस्य शरीरं श्वेतकान्त्या विराजमानं जातम् । दिव्यमङ्गलरूपं धृतवान् भैरवः बालकरूपिणं विघ्नेश्वरम् आनन्देन आलिङ्ग्य अवदत् - ''भवान् विघ्नेश्वरः इति अहं जानामि । मम उद्भवानन्तरम् अशरीरवाणी सूचितवती आसीत् यत् भवतः अनुग्रहतः कृष्णरूपता अपगमिष्यति, दैवत्वं च सिद्धं भविष्यति इति । एतं पर्वतं कोऽपि न आरोहति । मां दृष्ट्वा पक्षिणः अपि कलरवम् अकुर्वन्तः स्तब्धाः भवन्ति । अहं स्वस्य रूपम् एव स्वयं निन्दन् आत्मग्लानिं च अनुभवन् चिरकालात् भवतः प्रतीक्षां कुर्वन् आसम् । भवान् स्वस्य वास्तविकरूपस्य प्रदर्शनेन मां धन्यं करोतु'' इति ।

तदा विघ्नेश्वरः स्वकीयं वास्तविकं रूपं धृत्वा अवदत् - ''इतः परं देवतारूपेण भवतः पूजा भविष्यति । भवतः अन्तः शिवकेशवयोः अंशः अस्ति । मातुः मुखात् यदा भवतः वृत्तान्तः ज्ञातः ततः आरभ्य अहं भवद्दर्शन-कुतूहली आसम् । मोहः अन्धकारमयः भवति । शिवः मोहपरवशः सन् जगन्मोहिनी-रूपधारिणः विष्णोः अनुसरणं कृतवान् । शिवविष्ण्वोः तेजसः मेलनात् भवतः उत्पत्तिः जाता अस्ति । अतः एव भवान् कृष्णशरीरः जातः आसीत् । इदानीं तु भवादृशः दिव्य-मङ्गलसुन्दरस्वामी अन्यः कोऽपि नास्ति । शबरजनाः भवन्तं भक्तिपूर्वकं पूजयिष्यन्ति । भवान् तेभ्यः सकृत् दर्शनं ददातु'' इति ।

एतदनन्तरं विघ्नेश्वरः पुनरपि बालकरूपं धृत्वा शबराणां समीपम् आगत्य अवदत् - ''भवन्तः आराध्यदेवस्य मूर्तेः पुरतः स्थित्वा एकस्वरेण वदन्तु - 'हे देव ! वयं भवन्तं द्रष्टुम् इच्छामः, शरणागताः स्मः वयम्'. इति । तदा आराध्यदेवः दर्शनदानेन अनुग्रहं करिष्यति । भवन्तः कृषिं कुर्वन्तः गृहादिकं



निर्माय वासं कुर्वन्तु । अन्यमानवाः इव भवन्तः अपि सुखेन जीवन्तु । भगवतः कृपा सदा भवत्सु भविष्यति'' इति । एतावत् उक्त्वा भगवान् विघ्नेश्वरः अदृश्यतां गतः ।

एतया घटनया शबराः आश्चर्यचकिताः जाताः । ते विघ्नेश्वरं मनसा प्रणम्य आराध्य-मूर्तेः समीपं गतवन्तः । भक्त्या तस्य आह्वानम् आरब्धवन्तः । तदा सुन्दरदिव्यरूपं धृतवान् भगवान् तेषां पुरतः प्रत्यक्षः जातः । मन्दहास-पूर्वकं सः अभयमुद्रां प्रदर्श्य आशीर्वादं कृत्वा ततः अदृश्यः जातः ।

ततः आरभ्य शबराः मार्गशीर्षमासे कदलीसस्यादिभिः मण्डपं निर्माय स्वामिनः पूजाम् आरब्धवन्तः । बलिसमर्पणादिकं परित्यज्य भक्त्या देवं पूजितवन्तः ते । एतदनन्तरं ते अपि इतरनागरिकाः इव जीवनं यापयन्तः मानवतायाः आराधकाः जाताः ।

एतदनन्तरकाले तस्मिन् पर्वते सुन्दरं मन्दिरं निर्मितं, यत्र च भगवतः दर्शनं जातम् आसीत् । सङ्गीतनृत्यकवितादिभिः आराध्य-देवस्य पूजनं कुर्वन्तः ते उत्तमजीवनशैलीम् आश्रितवन्तः ।

बालकरूपेण आगतः कः इति शबराः न जानन्ति स्म । ते चिन्तितवन्तः यत् अस्माकं देवः एव बालकरूपेण आगत्य अस्मदीयम् अज्ञानं दूरीकृतवान् इति । सर्वं विघ्नेश्वरस्य लीला इति ते न जानन्ति स्म एव । तेषां स्वामी तु विघ्नेश्वरस्य लीलां सदा स्मरन् हृत्पूर्वकं तदीयं नाम जपति स्म । 'यदि मम वास्तविकं रूपं जानीयुः तर्हि एते शबराः स्वस्य आराध्यदेवस्य उपासनां परित्यज्य ममैव उपासनां कुर्युः' इति चिन्तयन् विघ्नेश्वरः स्वस्य

रूपं तिरोहितवान् आसीत् । भैरवेश्वरस्य तु सदा इच्छा भवति स्म यत् मया कदाचित् कैलासं गत्वा विघ्नेश्वरषण्मुखयोः सहवाससुखं प्राप्तव्यम् इति ।

एवं शबराणां जीवने परिष्कारम् आनीय विघ्नेश्वरः पुनरपि मूषकम् आरुह्य आकाशे सञ्चरन् अधः पश्यन् उत्तरस्यां दिशि प्रयाणम् अनुवर्तितवान् । यत्र पर्वतमूलप्रदेशेषु वृक्षादयः भवेयुः तत्र शुष्कता दृश्यते स्म । जलदात्री नदी काऽपि तत्र न दृश्यते स्म । अतः सर्वत्र जलाभावः एव आसीत् । जनाः तु आकाशं पश्यन्तः वृष्टेः आगमनं प्रतीक्षन्ते स्म ।

सामान्याः जनाः वदन्ति स्म – ''यस्मिन् प्रदेशे गङ्गाप्रभृतयः नद्यः प्रवहन्ति तत्रत्याः जनाः वस्तुतः भाग्यशालिनः । अस्माकं प्रदेशे गङ्गा न प्रवहेत् नाम । किन्तु तच्छाखा-नदीतुल्यां नदीं प्राप्तुम् अपि किं वयम् अनर्हाः ? भगवान् अस्मासु किमर्थं कृपां न प्रदर्शयति ? त्रयस्त्रिंशत्कोटिदेवाः सन्ति इति श्रूयते । किन्तु किं तेन ? एकोऽपि देवः अस्माकम् आर्तनादं न शृणोति'' इति । जनानाम् एतत् कथनं विघ्नेश्वरेण श्रुतम् ।

पश्चिमदिशि महापर्वताः दृश्यन्ते स्म । पूर्वदिशि लघुपर्वतानां श्रेणी समुद्रपर्यन्तं प्रसृता दृश्यते स्म । तयोः मध्ये वसन्तः असङ्ख्याः जनाः पशुपक्षिणां मारणेन जीवनं यापयन्ति स्म । ये केचन कृषिनिरताः आसन् ते कष्टमय-जीवनं यापयन्ति स्म । समुद्रतीरवासिनः तु प्राणापायम् अपि अपरिगणय्य समुद्रं प्रविश्य मत्स्यान् गृह्णन्तः श्रमजीवनं कुर्वन्ति स्म ।

एतस्य प्रदेशस्य जनजीवनं दृष्ट्वा विघ्नेश्वरः नितरां खिन्नः । हिमालयपरिसरे जलप्रपाताः, सरोवराः, नदीनदादयः च भूमेः समृद्धिं वर्धितवन्तः दृश्यन्ते स्म । किन्तु पश्चिमदिशि स्थिताः पर्वताः तु नितरां सारहीनाः आसन् ।

एतस्यां पर्वतश्रेण्यां सह्यपर्वतः अपि आसीत् । तस्य पर्वतस्य मूले गौतममहर्षेः आश्रमः शोभते स्म हारे मरकतमणिः इव । एतत्सर्वं दृष्टवतः विघ्नेश्वरस्य मनसि काचित् कार्ययोजना उद्भूता । सः विन्ध्याचलम् अतिक्रम्य उत्तरदिशि गतवान् । तत्रत्या भूमिः अन्यत्र स्थितायाः भूमितः पार्थक्येन एव दृश्यते स्म । तत्र गतः विघ्नेश्वरः अनिर्वचनीयं कञ्चित् भावं प्राप्तवान् ।





# रामभक्तः

कस्मिंश्चित् लघुपर्वते रामस्य देवालयः आसीत् । मन्दिरं परितः बहवः वानराः आसन् । मन्दिरं प्रति आगन्तारः भक्ताः तान् वानरान् हनुमद्रूपिणः भावयन्ति स्म । अतः यदा मन्दिरम् आगम्यते तदा तेभ्यः वानरेभ्यः फलकलायादीन् यच्छन्ति स्म ते ।

कपिलनामकः कश्चित् मातापितृभ्यां सह कदाचित् तत् मन्दिरं प्रति आगतः । तस्य पितुः सम्पत्तिं बान्धवाः वञ्चनया अपहृतवन्तः आसन् । अनेन कपिलः दरिद्रः जातः आसीत् । सः एतं विषयं न्यायाधिकारिणं वक्तुम् इष्टवान् । किन्तु न्यायाधिकारिणः दर्शनम् एव असाध्यम् आसीत् । यतः न्यायाधिकारिणः गृहस्य रक्षकैः अन्तः प्रवेष्टुम् अनुमतिः न दीयते स्म । अत्र कारणं तु – कपिलस्य बान्धवाः तेभ्यः रक्षकेभ्यः धनं दत्तवन्तः आसन् । कपिलः यदि अधिकं धनं दद्यात् तर्हि प्रवेशः लब्धः स्यात् । किन्तु कपिलस्य समीपे तावत् धनं कुतः ? अतः सः स्वदुःखं रामदेवं निवेदयितुं मन्दिरम् आगतः मातापितृभ्यां सह । प्रार्थनां समाप्य मन्दिरात् बहिरागत्य तदीयौ मातापितरौ वानरेभ्यः फलं दत्तवन्तौ ।

कपिलस्य समीपे अपि एकं कदलीफलम् आसीत् । दूरे उपविष्टम् एकं वानरं सः दृष्टवान् । वानरस्य मुखे कदलीफलस्य खादनेच्छा स्फुटं दृश्यते स्म । किन्तु सः उपविश्य एव पश्यन् आसीत् । कपिलः तस्य वानरस्य समीपं गतः । तदा सः ज्ञातवान् यत् सः वानरः व्रणितः इति । तस्मै कदलीफलं दत्तं कपिलेन । वानरः सन्तोषेण तत् कदलीफलं स्वीकृतवान् ।

कपिलस्य समीपे ग्रामवैद्येन दत्तम् औषधम् आसीत् । कपिलः तत् औषधं व्रणे लेपयित्वा वानरम् अवदत् – ''अत्र भोजनाय भवता यत्किमपि न लभ्येत । भवतः स्वास्थ्यं समीचीनं नास्ति अपि । मनुष्यः यथेष्टम् आनुकूल्यं प्राप्तुम् अर्हति । अतः भवान् मया



सह आगच्छतु'' इति ।

मानवानां मध्ये स्थिताः वानराः तेषां भावं ज्ञातुं समर्थाः भवन्ति । किन्तु प्रतिवक्तुं न पारयन्ति ते । सः वानरः मौनेन कपिलमेव पश्यन् आसीत् । ततः कपिलः मातापितृभ्यां सह प्रतिनिवृत्तः ।

अनन्तरदिने व्रणस्य शुष्कीभवनात् सः वानरः स्वस्थः अभवत् । अनेन तस्य महदाश्चर्यम् अभवत् । अतः सः अन्यं वानरम् एतं विषयं निवेद्य अवदत् - ''वयं मनुष्याणां मध्ये तैः सह एव वसाम'' इति ।

एतत् श्रुत्वा वृद्धः कश्चन वानरः हसन् अवदत् - ''मानवाः न विश्वासयोग्याः । मन्दिरम् आगताः जनाः अत्र यथा व्यवहरन्ति तथा स्वगृहेषु न भवन्ति । अस्माकम् एतदेव समीचीनं वासस्थानम्'' इति ।

वृद्धवानरस्य सूचना अस्मै वानराय न अरोचत । एकदा सः स्वस्मै कदलीफलं दत्तवन्तं धनिकमेव अनुसरन् तस्य गृहम् आगतः । धनिकस्य मनसि अभासत यत् एषः वानरः साक्षात् हनुमान् एव इति । अतः धनिकः तस्य वानरस्य पोषणादिकं सम्यगेव कृतवान् । तेन सह बालाः क्रीडितुमपि आरब्धवन्तः । सेवकाः अपि तस्य वानरस्य आवश्यकतां पूरयन्तः आसन् । वानरः तत्र सुखेन वसति स्म । ततः अल्पे एव काले तस्य कुचेष्टाबुद्धिः प्रकटिता जाता ।

एकस्मिन् दिने वानरेण धनिकस्य गृहे स्थितानि सर्वाणि वस्तूनि विकीर्णानि । सेवकाः यदा ग्रहीतुम् आगताः, तदा तेन गृहस्य पृष्ठभागे स्थितम् उद्यानं गतं, तत्रत्यानि सस्यानि नाशितानि, वृक्षशाखाः भञ्जिताः च ।

धनिकः एतत् सर्वं सोढुम् अशक्तः सन् चिन्तितवान् यत् वानरं गृहम् आनयता मया असमीचीनं कार्यं कृतम् इति । सः वानर-शापात् भीतः सन् तस्य भर्त्सनताडनादिकं किमपि अकुर्वन् तं वानरं कस्मैचित् ऐन्द्र-जालिकाय दत्तवान् ।

सः ऐन्द्रजालिकस्तु क्रूरहृदयः आसीत् । सः वानरं सम्यक् संताड्य भाययित्वा च अनेकाः विद्याः पाठितवान् । इदानीं सः वानरः ऐन्द्रजालिकस्य वशः अभवत् । वीथीषु वानरेण नृत्यं कारयन् सः ऐन्द्रजालिकः धनं सम्पादयितुम् उद्युक्तः । केषुचित् दिनेषु ऐन्द्र-जालिकेन ज्ञातं यत् एषः वानरः अन्यवानरेभ्यः अपि अधिकबुद्धिमान् इति । भयकारणात् सः वानरः नृत्यति स्म । किन्तु तस्मै जनानां

साधुवादः, करतालः इत्यादिकं न रोचते स्म । इदानीं वानरेण ज्ञातं यत् स्वातन्त्र्यमेव जीवने आनन्दं जनयति इति ।

गच्छति काले एकदा सः ऐन्द्रजालिकः वानरेण रक्तवर्णस्य युतकमेकं धारितवान् । तेन सः वानरः सुन्दरः दृश्यते स्म । प्रतिदिनमिव तद्दिने अपि एकत्र वीथ्यां नृत्यन्तं तं वानरं तस्मिन् मार्गे गच्छन् कश्चन रत्नवणिक् दृष्टवान् । सः वानरस्य नृत्येन आकृष्टः सन् तत्रैव स्थितवान् । तस्य हस्ते रत्नैः पूर्णः स्यूतः कश्चन आसीत् । तं दृष्ट्वा ऐन्द्रजालिकः वानरम् उद्दिश्य - ''भवान् वणिजः हस्ते स्थितं रत्नस्यूतम् आनीय ददातु । अहं भवन्तं कार्यात् अस्मात् मुक्तं करिष्यामि'' इति वदन् तस्य कण्ठे स्थितां शृङ्खलां निष्कासितवान् ।



वानरः शनैः शनैः कूर्दनं कुर्वन् वणिजः समीपं गतः । तस्य हस्ते स्थितं रत्नस्यूतं सहसा आकृष्य स्ववस्त्रमध्ये गोपितवान्, ततः त्वरया प्रस्थितश्च । अनया घटनया सः रत्नवणिक् स्तब्धः अभवत् । किन्तु केचन जनाः वानरम् उद्दिश्य पाषाणान् क्षेप्तुम् उद्युक्ताः । तस्मात् भीतः वानरः वृक्षम् आरुह्य ततः गृहस्य उपरि कूर्दनं कुर्वन् अन्ते कस्यचित् गृहस्य पृष्ठभागस्य उद्याने पतितः ।

तत् कपिलस्य गृहम् । तदा गृहात् बहिः आगतः कपिलः विसंज्ञं वानरं दृष्टवान् । सः त्वरया वानरस्य मुखे जलसेचनं कृतवान् । तेन सचेतनता प्राप्ता वानरेण । ततः कदली-फलं दत्त्वा तस्य बुभुक्षां शमितवान् कपिलः । वानरः कपिलस्य परिचयं प्राप्य तस्मै स्वस्य तं पादम् अदर्शयत्, यस्मिन् च पूर्वं कपिलेन औषधलेपनं कृतम् आसीत् । एषः वानरः कः इति ज्ञात्वा कपिलः अपि आश्चर्यचकितः सन् मातरम् आहूतवान् ।

कपिलस्य उच्चस्वरं श्रुत्वा मातापितरौ उभौ अपि आगतौ । एतन्मध्ये वानरः वस्त्रे गोपितं स्यूतं कपिलाय अयच्छत् । कपिलस्य पिता यदा स्यूतम् उद्घाटितवान् तदा तस्मिन् शोभमानानि रत्नानि तेन दृष्टानि ।

कपिलस्य पिता परसम्पत्तिं स्वाधीनां कर्तुं न इच्छति स्म । तस्मिन् स्यूते काचन चिटिका लब्धा । तस्यां रत्नवणिजः नाम सङ्केतः च आसीत् । तत् दृष्ट्वा पित्रा उक्तम् - ''रत्नस्यूतस्य अदर्शनेन सः वणिक् दुःखितः स्यात् । अहम् इदानीमेव तत्र गत्वा एतं स्यूतं तस्मै दत्त्वा आगच्छामि'' इति । ततस्तेन गृहात् प्रस्थितम् ।

रत्नवणिक् तु रत्नप्राप्तेः आशां पूर्णतया

त्यक्तवान् एव आसीत् । यदा कपिलस्य पिता आगत्य रत्नस्यूतं दत्तवान् तदा तेन अपारः सन्तोषः प्राप्तः । सः कपिलस्य पितरम् उक्तवान् - ''अस्मिन् काले भवादृशाः विरलाः । भवान् यत्किमपि साहाय्यं पृच्छतु । अहं करोमि'' इति ।

कपिलस्य पिता तदा स्वस्य दुःस्थितिं श्रावितवान् । रत्नवणिक् तदा तं सान्त्वयन् - ''स्वस्य परिस्थितिं मम पुरतः वदता भवता समीचीनं कार्यं कृतम् । सः न्यायाधिकारी मम मित्रमेव । चिन्ता मास्तु । भवतः न्यायदापनं मम कार्यम्'' इति उक्त्वा तदा एव तं न्यायाधिकारिणः गृहं प्रति नीतवान् । स्वगृहरक्षकाः धनाशया पीडिताः इति न्यायाधिकारी यदा ज्ञातवान् तदा तान् सर्वान् उद्योगात् निष्कास्य कपिलस्य पितुः सम्पत्तिं दायादजनेभ्यः दापितवान् ।

कपिलस्य पिता गृहम् आगत्य प्रवृत्तं सर्वं पत्नीपुत्रादीन् उक्तवान् । तेन कपिलः सन्तुष्टः सन् पितरम् उक्तवान् - ''पितः ! अस्माकं नष्टा सम्पत्तिः अस्मात् वानरात् एव पुनः प्राप्ता । अतः एतं गृहे एव पालयाम'' इति ।

''वत्स ! एतत् अनुचितम् । एतेन अस्माकं साहाय्यम् आचरितम् इति वयम् एतस्य स्वातन्त्र्यम् अपहरामः चेत् तत् न समीचीनम्'' इति पिता उक्तवान् ।

एतत् श्रुत्वा निरुपायः सन् कपिलः वानरं दृष्टवान् । किन्तु वानरस्य मुखे कपिलस्य पितुः वचनेन सन्तोषः एव दृश्यते स्म । यतः सः वानरः गतेषु केषुचित् दिनेषु जीवनतथ्यं किम् इति ज्ञातवान् आसीत् ।

सप्ताहानन्तरं कपिलः तं वानरं लघुपर्वते स्थितं राममन्दिरं नीत्वा तत्र त्यक्तवान् । कष्टात् विमुक्तिः प्राप्ता इत्यतः रामस्य विशेषपूजामपि कारितवान् । ततः परं यदा यदा कपिलः सपरिवारं राममन्दिरम् आगच्छति तदा तदीयौ मातपितरौ रामपूजां कुरुतः, कपिलः तु तं वानरं द्रष्टुं गच्छति । बालाः वानरस्य उपरि यदि पाषाणान् क्षिपन्ति तर्हि तान् सः वदति स्म - ''मित्राणि । पाषाणान् मा क्षिपन्तु । वानरान् प्रीत्या आदरेण च पश्यामः चेत् ते रत्नानि ददति । यदि तान् पीडयामः तर्हि तेऽपि अस्मान् पीडयन्ति । जगति न केवलं प्राणिनः, अपि तु जडवस्तूनि अपि प्रीत्या जेतुं शक्यानि । वानरं प्राणिमात्रं मा चिन्तयन्तु । सः भगवतः रामस्य सेवकः रामभक्तः हनुमान् एव'' इति ।





# असीमा मूर्खता

प्रसादः नगरस्थे न्यायालये कार्यं कुर्वन् आसीत् । स्वग्रामे तदीयम् एकं गृहम् पञ्चैकरपरिमिता भूमिः चापि आसीत् । सः सन्तानरहितः । तदीया पत्नी च अस्वस्था । अतः बहुभ्यः वर्षेभ्यः गृहस्य क्षेत्रस्य च संरक्षणं समीचीनतया न कृतम् आसीत् तेन । यदा निवृत्तिः आसन्ना तदा सः अचिन्तयत् यत् निवृत्त्यनन्तरं ग्रामे एव वासः करणीयः इति । अतः ग्रामे स्थितं गृहं समीकर्तुम् ऐच्छत् सः ।

किन्तु गृहस्य समीकरणस्य, क्षेत्रस्य पूर्वस्थितिप्रापणस्य च निमित्तं न्यूनातिन्यूनं मासत्रयम् आवश्यकम् एव आसीत् । न्यायालये अपि कार्यम् अधिकम् इति कारणतः सः स्वयमेव एतत् सर्वं कर्तुम् असमर्थः आसीत् ।

बहुभ्यः दिनेभ्यः प्रसादस्य गृहे परशुरामनामकः कश्चन कर्मकरः आसीत् । सः विश्वासयोग्यः, किन्तु न बुद्धिमान् ।

एकस्मिन् दिने परशुरामाय एव समस्तं कार्यभारं समर्प्य यावत् आवश्यकं तावत् धनमपि हस्ते दत्तवान् प्रसादः । परशुरामः सर्वाणि कार्याणि शीघ्रमेव समाप्य प्रत्यागतः । प्रसादः तस्य अनेन कार्येण सन्तुष्टः ।

स्वामी स्वस्य कार्येण सन्तुष्टः इति ज्ञात्वा परशुरामः प्रसादम् उक्तवान् – ''आर्य, अस्माकं क्षेत्रे कार्यं कर्तुं कूपस्य आवश्यकता अस्ति । कूपः यदि स्यात् तर्हि भूमिः इतोऽपि फलवती भवेत्'' इति ।

एषा सुचना युक्ता इति अचिन्तयत् प्रसादः । अतः स परशुरामम् – ''भवता युक्तम् उक्तम् । भवान् इदानीं ग्रामं गत्वा एतत् कूपकार्यं समाप्यैव आगच्छतु'' इति उक्त्वा धनमपि दत्त्वा प्रेषितवान् ।

सप्ताहद्वयानन्तरम् आगतः परशुरामः निराशतया प्रसादम् उक्तवान् – ''आर्य !



भवतः कथनानुसारं कूपखननं कारितम् । किन्तु त्रिंशत्पादपरिमितखननेनापि जलं तु न प्राप्तम्'' इति ।

तस्य वचनेन प्रसादोऽपि खिन्नः । तथापि – ''चिन्ता मास्तु । चत्वारिंशत्पादपरिमितं खननं कारयतु । तदा अपि जलं न प्राप्तं चेत् पञ्चाशत्पादपर्यन्तं खननं कारयतु, तेन जलं अवश्यं प्राप्येत एव'' इति कथयन् किञ्चित् अधिकमेव धनं दत्वा तं प्रेषितवान् ।

सप्ताहचतुष्टयानन्तरं परशुरामः पुनः निराशतया एव प्रत्यागतः । महता दुःखेन अश्रु स्रावयन् सः उक्तवान् – ''स्वामिन् ! पञ्चाशत्पादपर्यन्तं खननं कृतं चेदपि जलस्य बिन्दुरपि न दृष्टः'' इति ।

प्रसादः आश्चर्यचकितः । किमर्थम् एवम् अभवत् इति सः न ज्ञातवान् । पार्श्वस्थक्षेत्रेषु तु जलं पर्याप्ततया प्राप्तम् आसीत् । प्रवृत्तं ज्ञात्वा तस्य पत्नी शान्ता उक्तवती – ''परशुरामः तत्र गत्वा किं कृतवान् इति न ज्ञायते । अतः भवान् एकवारं स्वयं गत्वा पश्यतु'' इति ।

तथैव भवतु इति निश्चित्य प्रसादः कार्यात् विरामं स्वीकृत्य परशुरामेण सह ग्रामं गतः । क्षेत्रं गत्वा यदा दृष्टं तदा सः आश्चर्येण स्तब्धः अभवत् । तत्र कृतं कार्यं दृष्ट्वा तस्य शिरः अभ्रमत् । यतः तत्र त्रयः गर्ताः आसन् । एकः त्रिंशत्पादात्मकः, अन्यः चत्वारिंशत्-पादात्मकः, अपरः पञ्चाशत्पादात्मकः ।

प्रसादः जानाति स्म एव यत् परशुरामः न बुद्धिमान् इति । किन्तु एतावन्मूर्खः इति तु सः न ज्ञातवान् आसीत् । बुद्धिराहित्यस्यापि काचित् सीमा भवति खलु ? किन्तु परशुरामस्य बुद्धिहीनतायाः तु सीमा एव न आसीत् । एतत् दृष्ट्वा प्रसादः चिन्तितवान् – 'एतस्य भर्त्सनेन किमपि प्रयोजनं नास्ति' इति ।

अतः सः परशुरामम् उक्तवान् – ''परशुराम ! भवता महान् प्रमादः कृतः । प्रथमं यत्र त्रिंशत्पादपर्यन्तं खननं कारितं तस्मिन् एव इतोऽपि विंशतिपादपर्यन्तं खानितं चेत् पर्याप्तम् अभविष्यत् । तदा जलमपि प्राप्तं स्यात् । भवतः अनेन कार्येण महत् धनमपि नष्टं जातम् । तेनैव सह क्षेत्रे सर्वत्र गर्तः अपि'' इति ।

एतत् वचनं श्रुत्वा दुःखितः परशुरामः स्वामिनः पादयोः पतितः । प्रसादः एव तं सान्त्वयन् – ''परशुराम ! गतं न चिन्तयेत् । इदानीम् अश्रुस्रावणेन प्रयोजनं नास्ति । कृतस्य

प्रमादस्य समीकरणं कथमिति चिन्तनीयम् । एतेषु अन्यतमः गर्तः इतोऽपि गभीरतया खानितः चेत् जलं लप्स्यते । अन्यदुभयम् मृदा पूरयतु । अहम् अत्र स्थातुं न शक्नोमि । श्वः मम कार्यालये कार्यमस्ति'' इति उक्त्वा तस्य हस्ते किञ्चित् धनं संस्थाप्य प्रस्थितः ।

''वयं किं कर्तुं शक्नुयाम ? परशुरामं विना सहायकः अन्यः नास्ति अस्माकम् । जलं लब्धं चेत् वयं भाग्यवन्तः एव'' इति चिन्तायुक्तस्वरेण प्रसादस्य पत्नी उक्तवती ।

सप्ताहानन्तरम् आगतः परशुरामः सन्तोषेण उक्तवान् – ''जलं लब्धम्'' इति ।

प्रसादोऽपि सन्तोषेण पृष्टवान् – ''कियत्-पादात्मकेन खननेन जलं लब्धम् ?'' इति ।

तदा परशुरामः उक्तवान् – ''षष्टिपादात्मकं खानितम् । यत्किमपि भवतु, अस्माकं क्षेत्रस्य निमित्तं पर्याप्ततया जलं तु लब्धम्'' इति । प्रसादः अतीव सन्तुष्टः ।

परशुरामेण प्रत्यर्पितं धनं गणयन् प्रसादः पुनः तं पृष्टवान् – ''कतमः गर्तः खानितः ?'' इति ।

परशुरामः सविनयम् अवदत् – ''यः गर्तः त्रिंशत्पादात्मकः आसीत् तत्रैव पुनः त्रिंशत्-पादात्मकं खननं कारितम् । अन्यदुभयं मृदा पूरितम्'' इति ।

तस्य उत्तरं श्रुत्वा स्तब्धः अभवत् प्रसादः । ''यः पञ्चाशत्पादात्मकः आसीत् स एव खानितः चेत् तेन कार्यं शीघ्रं सिध्येत् खलु ? धनव्ययोऽपि न्यूनः स्यात् । भवता विवेकहीनं कार्यं कृतम्'' इति परशुरामम् अवदत् प्रसादः ।

एतत् सर्वं श्रुतवती शान्ता मध्ये उक्तवती – ''परशुरामस्य मूर्खता कियती इति चर्चा मास्तु । भवतः मूर्खता कियती अस्ति इति इदानीं पश्याम । परशुरामेण कूपखनने द्विवारं दोषः आचरितः इति यदा ज्ञातं तदा भवता तृतीयकार्यकथनसमये कथं कार्यं कारणीयम् इति विषये समीचीना सूचना दातव्या आसीत् । विना कारणं जातस्य धनव्ययस्य मूलं कारणं भवानेव । एवं ननु ?'' इति ।



# धूमः - पूर्वजन्मनः कर्म इव

वसन्तः अन्येभ्यः ऋणस्वीकरणे चतुरः । सः मधुरैः वचनैः जनान् वशीकृत्य ऋणं प्राप्नोति स्म । प्रायः तस्य ग्रामे तादृशः कोऽपि न आसीत्, यस्मात् वसन्तः ऋणं स्वीकृतवान् न स्यात् । ऋणस्य प्रत्यर्पणात् आत्मनः रक्षणे अपि सः चतुरः आसीत् ।

कदाचित् देवीलालः नाम कश्चन कृषिकः ऋणस्य प्रतिसङ्ग्रहार्थं वसन्तस्य गृहम् आगतवान् । सः द्वारशब्दं कृतवान् । वसन्तस्य पत्नी द्वारम् उद्घाट्य पृष्टवती – "किम् आवश्यकम् ?" इति ।

देवीलालः अवदत् – "वसन्तः कुत्र ? सः मत्तः द्विशतं रूप्यकाणि स्वीकृत्य उक्तवान् आसीत् यत् द्वित्रेषु दिनेषु प्रत्यर्पयिष्यामि इति । ततः सप्ताहः अतीतः चेदपि तस्य मुखदर्शनं नास्ति । तं बहिः प्रेषयतु । अद्य, यावत् सः ऋणं न प्रत्यर्पयति तावत् अहम् इतः न प्रतिगमिष्यामि" इति ।

तदा वसन्तस्य पत्नी उक्तवती - "सः गृहे यदि स्यात् तर्हि खलु तं बहिः प्रेषयेयम् ?" इति ।

"किमर्थम् असत्यम् उच्यते ? भवत्याः वचने विश्वसितुं नाहं मूर्खः । शीघ्रं तं बहिः प्रेषयतु तावत्" इति अवदत् देवीलालः ।

"सः अन्तः अस्ति इति कथं निर्णीतं भवता ?" इति पृष्टवती वसन्तस्य पत्नी ।

"धूमवर्तिकायाः गन्धः इतः एव आघ्रायते मया । एतस्मात् सिद्ध्यति यत् सः अन्तः एव अस्ति इति" इति अवदत् देवीलालः ।

एतत् श्रुत्वा वसन्तस्य पत्नी हसन्ती उक्तवती - "धूमवर्तिकां सेवमानस्य निर्गमनस्य अनन्तरम् अपि गन्धः अनुवर्तते, पूर्वजन्मनः कर्मणः फलम् इव । भवतः आगमनं दूरात् एव दृष्ट्वा सः पृष्ठभागस्थद्वारात् झटिति निर्गतवान्" इति ।

देवीलालः कोपेन वसन्तं मनसि एव निन्दन् ततः निर्गतवान् ।



चन्दमामायाः प्रस्तुतिः

# अजेयः गरुडः

17

चित्रं - पाणिः

गुहामन्दिरे तान्त्रिकः नागबन्धुः अनुष्ठानम् आकस्मिकतया स्थगयति । आप्तः नरेन्द्रदेवं वदति यत् कोऽपि दोषः जातः अस्ति इति । आदित्यनामकस्य पुरुषस्य कारणतः एवं जातम् इति तान्त्रिकः वदति । आदित्यः गुहायां राज्ञा मिलति । सः वदति यत् राजा नूतने उपनगरे वासं करोतु इति । किन्तु राजा प्रासादे एव वासम् इच्छति । प्रजानां मध्ये एव स्थातव्यम् इति तस्य इच्छा ।

अश्वारोहणात् पूर्वम् आदित्यः रामसिंहम् अरुणां च यथोचितं कार्यं सूचयति ।

अरुणा राज्ञा सह यात्रां करोतु । गमनसमये अस्मदीयाः सूचनीयाः यत् रवीन्द्रदेवस्य सैनिकाः राज्ञः प्रयाणे विघ्नं यथा न कुर्युः तथा जागरूकता आश्रयणीया इति ।

आदित्यः अश्वम् आरुह्य विद्युद्गत्या अग्रे गच्छति ।

अहो, अग्नि-गोलकम् ! एतत् मद्दिशि एव आगच्छत् अस्ति । अहं किमपि द्रष्टुम् असमर्थः जातः अस्मि ।

तत् गोलकपदार्थः खण्डशः विभक्तः सन् सर्वत्र प्रसरन् अश्वम् अश्वारोहिणं च आत्मनः अन्तः स्वीकरोति । आदित्यः अश्वात् पतति ।

किम् एतत् ? अहं भूमौ नास्मि । आकाशे लम्बमानः इव अस्मि । किम् अहं तरामि ?

अहो ! तत्र दृश्यते प्रकाशमाना आकृतिः । सः गरुडः ।

गरुडस्य शक्तिशालिनी आकृतिः प्रत्यक्षा भवति ।

तस्य शक्तिवलये अहम् अस्मि प्रायः ।

वत्स ! शृणोतु, तान्त्रिकः नागबन्धुः महादुष्टः । चत्वारिंशद्दिनाभ्यन्तरे षष्टितमी बलिः समर्पणीया इत्यस्ति तस्य सङ्कल्पः । ततःपूर्वम् एव तं संहरतु भवान् ।

भवदन्तः यदा अहं तिष्ठामि तदा भवतः काऽपि विपत्तिः भवितुं न अर्हति ।

मां तान्त्रिकसमीपं नयतु प्रभो । अहं तं नाशयिष्यामि ।







यदा विराट् गरुडः अन्तर्हितः भवति तदा आदित्यः तेन दत्तायाः शक्तेः उपयोगस्य चिन्तनाय ध्यानस्य आरम्भं करोति ।

गुहामन्दिरे अर्धरात्रसमये नागबन्धुः नरेन्द्रदेवस्य आनयनाय आप्तपुरुषं प्रेषयति ।

मया कश्चन स्वप्नः दृष्टः । कश्चन युवकः तत्र दृष्टः । सः अन्तिमबलित्वेन गुरवे समर्प्यते मया ।

भवतः पुत्रस्य अपायः भवेत् । प्रासादप्राप्तितः पूर्वम् एव सः युवकः राज्यात् बहिष्करणीयः ।













तान्त्रिकः नरेन्द्रदेवं गमनात् निवारयति ।

कश्चन अंशः मया विस्मृतः आसीत् । भवत्पुत्रः राजा भवेत् इति यदि भवतः इच्छा तर्हि...

आदित्यः भवता मदधीनीकरणीयः । भविष्यति सः मम षष्टितमी बलिः ।

आर्य ! महोदय ! भवतः इच्छा पूर्यते मया ।

*अनुवर्तते*

# राजधर्मः

पूर्वं फारसदेशस्य राजा नौशेरखानः स्वस्य न्यायनिर्णयेन सुविख्यातः जातः आसीत् । तदीया राजनीतिः, न्यायानुसरणं च लोकविख्यातं जातम् आसीत् ।

एकदा सः मृगयार्थं सपरिवारम् अरण्यं गतवान् । मृगया प्रवृत्ता । मध्याह्नसमये एकत्र शिबिरं कृतम् । पाकादिव्यवस्था अपि आरब्धा । तावता ज्ञातं यत् लवणस्य आनयनम् एव विस्मृतम् इति । अतः व्यवस्थाप्रमुखः एकं भटम् आज्ञापितवान् - ''समीपस्थं ग्रामं गत्वा लवणम् आनयतु'' इति ।

एतत् दूरात् एव श्रुत्वा राजा अवदत् - ''यावत् आवश्यकं तावत् एव आनयतु । धनं दत्त्वैव आनयतु'' इति ।

''प्रभो ! किं लवणस्य अपि मूल्यं दातव्यम् ?'' इति आश्चर्येण अपृच्छत् व्यवस्थाप्रमुखः ।

''आम् । विना धनदानम् अल्पमूल्यकानां वस्तूनां स्वीकरणम् आरब्धं चेत् गच्छता कालेन अधिकमूल्यस्यापि स्वीकरणस्य प्रवृत्तिः प्रवर्धते । बलात् वस्तूनां स्वीकरणम् अपि प्रवर्तिष्यते । जनानां पीडनं भविष्यति । अग्रिमपरम्परायाम् एषा एव प्रवृत्तिः वर्धिष्यते । अतः आरम्भे एव जागरूकतावहनं वरम्'' इति अवदत् राजा ।



# कालोऽयं मनोविनोदस्य

## कूर्मस्य साहाय्यं क्रियताम्

धीरुकूर्मः पयोहिमप्रियः । किन्तु सः वक्रताबहुलस्य एतस्य मार्गस्य क्रमणं न जानाति । किं भवन्तः तस्य साहाय्यं कर्तुं शक्नुयुः ?







## अन्विष्यन्तां भेदांशाः

एतत् चित्रद्वयम् अपि समानरूपम् इव दृश्यते । किन्तु तयोः अष्ट भेदांशाः सन्ति । तान् अन्विष्यन्तु तावत् ।



## मीनाः गण्यन्ताम्

शीनः मीनग्रहणम् इच्छति । तेन गृहीताः मीनाः इतस्ततः विकीर्णाः सन्ति । सूक्ष्मतया परिशील्य चित्रे कति मीनाः सन्ति इति जानन्तु ।

## सदृशः कः ?

शेनुशशः कश्चित् बाणं प्रयुक्तवान् अस्ति । अधोभागे स्थितेषु बाणेषु कश्चन तत्सदृशः अस्ति । सः कः इति वदन्तु अविलम्बेन ।




(उत्तराणि ६६ तमे पृष्ठे)




# चित्रशीर्षिकास्पर्धा





**उपरितनं चित्रद्वयं दृष्ट्वा परस्परसम्बन्धिवाक्यद्वयेन चित्रशीर्षिकां किं भवन्तः प्रेषयितुं शक्नुयुः ?**

समपत्रे लिखिता चित्रशीर्षिका अधस्तनसङ्केताय प्रेषणीया -

**चन्दमामा (संस्कृतम्) 'अक्षरम्'** ८ उपमार्गः, गिरिनगरम्, बेङ्गलूरु - ५६००८५

युक्ता शीर्षिका एतन्मासस्य २५ तः पूर्वं प्रेषणीया । सर्वश्रेष्ठायै शीर्षिकायै रू.१००/- पुरस्काररूपेण दास्यन्ते ।
पुरस्कृता शीर्षिका मासद्वयानन्तरं प्रकाशयिष्यते ।

## अभिनन्दनानि

**'जुलै'मासीयस्पर्धाशीर्षिकाप्रेषकः -**

**श्री अम्बर आचार्यः**

*१०४, गणेश अपार्टमेण्ट्, प्रथमः अङ्कः, पडवलनगर, बागले स्टेट्, ठाणे (पश्चिम) - ४०० ६०४*

**पुरस्कृतशीर्षिका**





पश्यसि किं गगनं साकूतम् ?
रोदिषि कुतः ? न हि दुग्धाहारः ?

| उत्तरम् मनोविनोदस्य (पु - ६४) | अन्विष्यन्तां भेदांशाः | | |
|---|---|---|---|
| | १. सिंहस्य कण्ठरोम । | ५. वृकस्य पुच्छम् । | सदृशः कः ? तृतीयः बाणः । |
| | २. मक्षिकायाः पक्षः । | ६. पुष्पपात्रे रेखा । | |
| | ३. मत्कुणशरीरस्था चित्राकृतिः । | ७. पुष्पसङ्ख्यायां न्यूनता । | मीनाः गण्यन्ताम् १७ मीनाः । |
| | ४. गजस्य भ्रुवौ । | ८. कीटस्य दैर्घ्यम् । | |

Printed and Published by B. Viswanatha Reddi at B.N.K. Press Pvt. Ltd., Chennai - 600 026 on behalf of Chandamama India Limited, No. 82, Defence Officers Colony, Ekkatuthangal, Chennai - 600 097. Editor : Viswam

**Chandamama CD-ROMs, are also available at all leading bookstores in India.**









Create your own Posters

Learn to Draw

Click to Paint

Drag and Drop to Dress Up your family



>DIRECT MAIL OFFER FOR CHANDAMAMA READERS<

**To avail 20% discount on Chandamama CD-ROMs, please write to the Project Head Multimedia with your :**

Name & Mailing address ........................

Fun Workshop ☐ Copies

Early Reader Series
Jataka Tales Level 1 ☐ Copies
Total Copies : ☐ x 199

Please add delivery charges : By Regd. Post Rs. 41/- per CD and Rs.25/- for out-station cheques.

Enclose your order with a Cheque / DD, drawn in favour of Chandamama India Limited, payable at Chennai.

** Offer available only for Indian residents.*

# CHANDAMAMA'S

## EARLY READER SERIES
## Level-1

### ( FIRST 100 HOURS OF LANGUAGE LEARNING )












JATAKA TALES - Early Reader Series (Level 1) teaches children to instantly recognise 100 sight words in English. It promises clean fun, good learning and a superior pedagogical approach.

It is the first of a 3-series pack.

These CD-ROMs can also be used for any ESL (English as Second Language) course or Adult education programs that teach English.

*Across media, a common tradition!*



*For trade and commercial enquiries contact:*
*Project Head, Multimedia*
**CHANDAMAMA INDIA LIMITED**
No. 82, Defence Officers Colony,
Ekkatuthangal, Chennai - 600 097, India
Ph : 91-44-2347384, 91-44-2347399
Visit us at http://www.chandamama.org